प्रतिजानते । यथा ग्रामनगरादिकं दहन् वह्निर्देहत्येव तदपि चाप्रयमन्तिमं तथा चरमवृत्तिमुपाश्रित्य निखिलं प्रपञ्चमुन्मूलयन्नखण्डचैतन्यप्रकाशः सर्वनिवर्तनचम इति नानुपपत्तिश्चरमवृत्तिनाशे इति निमील्यैव नेत्रे वदन्ति तदेतदपि न युक्तिसहं तथा हि चरमवृत्त्युपारूढचैतन्यप्रकाशस्य निवर्तकत्वे विशिष्टस्य निवर्तकता वाच्या विशिष्टं च विशेषणविशेष्याववेति चैतन्यस्याज्ञानभासकस्य परमोदासीनस्वभावस्याज्ञाननाशकताऽङ्गीकृतेति सिद्धान्तच्युतिर्यदि विशिष्टमतिरिक्तमिति शुद्धस्याज्ञानसाक्षिणो न निवर्तकत्वं तर्हि तद्विशिष्टमतिरिक्तमिति तन्निवर्त्यमिति किं तन्निवर्तकमिति निरूपय तत्र वृत्त्युपहितस्य निवर्तकत्वे वृत्तिविशिष्टस्य च निवर्त्यत्वे विशिष्टनिवृत्तावपि नोपहितनिवृत्तिरित्यद्वैतभङ्गो, यदि तु विशिष्टनिवृत्तिर्विशेष्ये निवृत्त्ययोगाद्विशेषणपर्यवसायिनीति चरमवृत्तिनिवृत्तौ नोपहितावस्थानापादनसंभवो ययाऽन्तिमवृत्त्योपहितं ब्रह्म वृत्तिविशिष्टस्य नाशकं सा वृत्तिश्चेन्नष्टा न तदोपहितावस्थानसंभव इत्युच्यते तर्हि ययोपहितं ब्रह्म नाशकं यद्विशिष्टं च नाश्यं सा व्यक्तिरेका वा द्वयी वा यद्येका तदा स्वस्यैव स्वनाशकत्वपर्यवसानं न च स्वं स्वपूर्ववृत्तीति पूर्ववृत्तित्वघटितकारणतानिर्वाहविरहः । यदि व्यक्तिद्वयं तदोपहितब्रह्मव्यक्त्या विशिष्टब्रह्मव्यक्तिनाशेऽपि वृत्त्युपहितब्रह्मव्यक्तिः कथमपसरेत् सा हि विशिष्टापसारिका, न चापसार्येऽपसृतेऽपसारकमकस्मादेवापसरेद्वा अपसार्यापसारके उभे एव यौगपद्येनापसरेतां वेति वा कल्पयितुं शक्यते अपसार्यापसारकयोर्यौगपद्येनापसरणासंभवात् । न हि युगपदुत्पद्यमानौ परस्परं कार्यकारणभावापन्नाविति सह विनश्यन्तौ वा परस्परं नाश्यनाशकभावापन्नाविति सांप्रतं, लोके सहोत्पन्नयोरिव सह विनश्यतोस्तथा भावा-

नङ्गीकारात्। कारणता हि पूर्ववृत्तित्वगर्भेत्यसकृदवोचाम। यथा च नानन्यथासिद्धत्वमात्रस्वरूपा कारणता तथाऽन्यत्र निरूपितमस्माभिः। एवं च सहापसरतोरविद्योपाधिब्रह्माविद्याऽवच्छिन्नब्रह्मणोर्नोपसार्यापसारकभाव इति सुव्यक्तमुपपादितं भवति। यथाचैकस्या एव व्यक्तेरूपभेदेऽपि न कार्यकारणभावनिर्वाहस्तथा निरूपितं सप्रपञ्चमद्वैतसिद्धिकृन्मतनिराकरणावसरेऽस्माभिरिति तत्र द्रष्टव्यम्। यश्च चरमवृत्त्युपलक्षितस्यात्मनोऽज्ञानहानिरूपतामवलम्ब्य उपलक्षणीभूतचरमवृत्त्यंशे साध्यत्वेन मोक्षे आत्मस्वरूपविश्रान्तेऽपि साध्यत्वसमर्थनसमुद्यमः। यश्च निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः। उपलक्षणनाशेऽपि स्यान्मुक्तिः पाचकादिवत्॥ इति सुरेश्वरवार्त्तिकोपष्टम्भः। योऽपि च निवृत्त्युपलक्षितस्यात्मनः पश्चादिव पूर्वमपि सत्त्वेन मोहकालेऽपि तद्धान्यापत्तिरित्याशङ्क्य पूर्वमसिद्धस्योपलक्षणत्वायोगात्। न हि पाकसम्बन्धात्पूर्वं पाचको भवति। तथा व्यवह्रियते वेति समाधिश्रमः स सर्वोऽपि लोकव्यामोहहेतुराग्रहनिबन्धनावेश एव यतो नष्टस्योपलक्षणत्वे पूर्वमसतोऽप्युपलक्षणत्वे बाधकाभावः यथाऽसन्नपि नष्ट उपलक्षयितुं क्षमते तथाऽसत्त्वाविशेषात्पूर्वमसतोऽप्युपलक्षणत्वे न किंचिदवहीयते जनिष्यमाणस्योपलक्षणत्वे चिरं तस्योपलक्षणत्वप्रसङ्गस्तु विनष्टस्य चिरमुपलक्षणत्वसमानः, अत्रेष्टापत्तौ तत्रापीष्टापत्तेः समत्वात्। जनिष्यमाणज्ञानमपि अनुमानादिद्वारकं विनष्टज्ञानसमसामग्रीकमेवेति न किञ्चिदिहाधिकं चोद्यमापद्यते।

अत एव तु लोके अदृष्टरणाङ्गणेष्वपि योद्धृषु योद्धृताव्यवहारोऽन्यथा तु कदाऽप्यपरिदृष्टरणाङ्गणेषु तथा व्यवहारो निर्निबन्धन एव स्यात्। शास्त्रेऽपि च जातमात्रं शिशुं करिष्यमाणपि-

पिण्डदानादिद्वारकस्वपितृनरकनिपतननिराकरणकारणतया अपत्यं दौहित्रं च तत एव नप्तारं ब्रुवते । सङ्गिरन्ते च स्वरसतो भूमिष्ठमात्रं जननक्षण एव बालं तातं, तत्र हि कुलतननहेतुत्वनिबन्धनस्तातपदव्यवहारस्तनोतेर्विस्तारार्थस्य कर्तरि क्तेन तातपदव्युत्पत्तेः । अभिदधते च कृतसप्तपदीसंस्कारमात्रामनुद्भिन्नलोम्नीमनुत्पन्नस्तनीमपि बालां भविष्यत्कुलसंस्त्यानिदानतया स्त्रियं, स्त्यै ष्ट्यै शब्दसंघातयोरिति संघातार्थकस्य धातोः ड्रट्प्रत्ययेन कर्त्रर्थेन तत्पदव्युत्पत्तेः ।

एवमेव तु । श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः । अवेत्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसम्भवमिति काव्यकृतामपि जनिष्यमाणश्रुतान्तशालितया युधि भविष्यत्परपारशालितया च दिलीपस्य पितुर्जातमात्रस्य शिशोरघुनामकरणोपवर्णनमिहार्थेऽनुकूलं भवति । न हि श्रुतान्तं वा परान्तं वा गतो बाल इति रघुः, किन्तु असूर्यगैः पञ्चभिरुच्चसंश्रयैः सूचितभाग्यसंपत्कः स तां गमिष्यतीति पिता पूर्वमेव तथा व्यवजहार व्याजहार चेति क्व नु नाम पूर्वमसिद्धस्य व्यवहाराहेतुत्वसमर्थनं वा उपलक्षणत्वासम्भवोपवर्णनं वा सम्भाव्येतापि प्राज्ञेन ।

यदि तु श्रुतस्य यायादयमन्तमर्भक इत्यादौ शत्रर्थलिङा श्रुतान्तज्ञानशक्तिर्बोध्यते सा तु जातमात्रेऽपि बालेऽभूदिति तन्मूलकावेव तथा व्याहार–व्यवहारौ नोपलक्षणत्वमूलकाविति न ततोऽर्थसिद्धिरित्यभिधत्से तर्हि नष्टेऽप्युत्तरावस्थत्वमूलमेवोपलक्षणत्वमिति नष्टस्याप्युपलक्षणत्वायोगः । नश्यत उत्तरावस्थावाप्तिरेव हि नाशो न ततोऽर्थान्तरम् । एवं च भविष्यतोऽपि पूर्वावस्थत्वमेव तथेति

सर्वथा समानयोगक्षेमं भविष्यन्नष्टयोरुपलक्षणत्वमिति विशेषज्ञा एवेह साक्षिणः ।

येन हि स्वोपरागमुदासीनं कुर्वता विशेष्यगतव्यावर्तकधर्मोपस्थापनेन व्यावृत्तिबुद्धिर्जन्यते तदेवोपलक्षणमिति स्वोपरागांशे चेदुदासीनमुपलक्षणं तर्हि नष्टस्येव भविष्यतोऽप्युपलक्षणत्वे न किंचिद्बाधकमिति वादिनः शपथैकनिर्णेयं जनिष्यमाणस्योपलक्षणत्वासंभवाभिधानम् । एवं च चरमवृत्तेः प्रागपि चरमवृत्त्युपलक्षितस्याज्ञानहानिरूपस्यात्मनः सत्त्वेन भवदभिमतोमोक्षः सिद्धरूप इत्युपलक्षणस्य साध्यत्वेन मुक्तेः साध्यत्वसमर्थनं काकदन्तायितमेव ।

यदि तु जनिष्यमाणस्य नोपलक्षणतया भविष्यद्व्यवहारकारणत्वं किन्तु योग्यतया सूत्रशाटकन्यायेन तदा नष्टस्यापि नोपलक्षणतया व्यवहारहेतुत्वं किन्तु योग्यत्वेन भूतपूर्वगत्येति समानं, यदि पुनर्भूतपूर्वगतिन्याय उपलक्षणत्वनिदानस्तदा सूत्रशाटकन्यायोऽपि तथेति को विशेषः तस्मान्नष्टस्येव भविष्यतोऽप्युपलक्षणत्वाच्चरमवृत्त्युपलक्षितस्यात्मनः सर्वदैव सत्त्वात्तस्य पुरुषार्थत्वसमर्थनखंनाहो बालचेष्टायित इति नापरोक्षं मतिमताम् ॥

यदप्यत्र घटादिज्ञानवद् ब्रह्मज्ञानस्यापि न मूलाज्ञाननिवर्तकत्वं युक्तं निवर्तकत्वे तदवस्थानासहिष्णुत्वरूपस्य विरोधस्य तन्त्रत्वात् कार्यस्य चोपादानेन सह तादृशविरोधाभावादित्याशङ्क्य कार्यकारणयोरन्यत्र तादृशविरोधादर्शनेऽपि एकविषयकज्ञानाज्ञानप्रयुक्तस्य तादृशविरोधस्यात्र सत्त्वात्कार्यकारणयोरप्यग्निसंयोगपटयोस्तादृशविरोधदृष्टेश्चेति समादधुः सिद्धान्तलेशकारास्तद्वेतदतिमन्दं तथा हि ज्ञानाज्ञानयोः समानविषयकत्वेन विरोधो वक्तव्य एवं च प्रप-

ज्ञान्तर्गततया ब्रह्मज्ञानव्यक्तेरपि ब्रह्माज्ञानजन्यत्वाद् यया तूला-विद्यास्वरूपया ब्रह्माज्ञानव्यक्त्या ब्रह्मज्ञानमुत्पादितं सा काचिदपरा ब्रह्मज्ञानोदयानन्तरक्षणस्थायिनी व्यक्तिरवश्यमङ्गीकरणीया विद्यमानेच ब्रह्माज्ञाने उद्यन्ती ब्रह्मज्ञानव्यक्तिः स्वजनकब्रह्माज्ञानानुरोधेन कल्पितविषयैवास्थेयेति तस्याः सावच्छिन्नब्रह्मविषयकत्वेनाखण्डब्रह्मविषयकत्वाभावादसमानविषयकत्वेन कथं विरोधः । न हि ज्ञानाज्ञानयोरसमानविषयकत्वे विरोधः । अज्ञानं हि शुद्धं ब्रह्म तिरोदधदवतिष्ठते ज्ञानं चोत्पद्यमानमज्ञानोपादानकतया न शुद्धं विषयीकर्तुमर्हति अज्ञानस्य शुद्धविषयकतया यावदज्ञानेनावृतं ब्रह्मावतिष्ठते तावदेव ब्रह्मज्ञानस्यापि च बाध्यतया तयोरसमानविषयकत्वेन विरोधस्य वक्तुमशक्यत्वात् ।

न चोद्यन्ती ब्रह्मज्ञानव्यक्तिः शुद्धमेव विषयीकरोति यतः सा चरमा ब्रह्मज्ञानव्यक्तिर्ब्रह्मण्युपाधिभूतेति ब्रह्म व्यावर्तयन्त्यपि नं तत्रोपलक्षणीभूता नापि विशेषणीभूतेति ज्ञानाज्ञानयोः समानविषयकत्वमावश्यकमिति शङ्क्यम् । यतश्चरमज्ञानव्यक्तेरयमुपाधिभावः किं चरमव्यक्त्युत्पत्तेः प्रागेव सिद्धोऽथवा स्वोत्पत्त्यनन्तरम्, उत्पत्त्यनन्तरमपि वा किं चरमव्यक्तिस्वभावकृतोऽथवा ब्रह्मस्वभावकृत इति विवेचनीयं, तत्र नाद्यश्चरमव्यक्त्युत्पत्तेः पूर्वं तस्या उपाधिभावासम्भवात् । नापि स्वोत्पत्त्यनन्तरम्, उत्पद्यमानायास्तस्या आविद्यिकत्वेन कार्यस्य चोपादानात्मकतायाः व्यवहारदशायां भवताऽप्यवश्यं वक्तव्यत्वेन उपादानीभूतब्रह्माज्ञानानुवृत्त्या तत्काले अज्ञानस्योपाधिभावाभिधानासङ्गतेः । नापि चरमव्यक्तिस्वभावकृत उपाधिभाव इति कल्पोऽप्यवकल्पते आविद्यिकव्यक्त्यन्तराणामिव तस्या अपि ब्रह्माज्ञानजन्यतया विलक्षणस्वभावत्वे प्रमा-

याभावेन तस्या उपाधिभावस्याकस्मिकत्वापत्तेः। यद्यपि चरमज्ञानव्यक्त्यनन्तरं किंचिदपि कार्यं नोत्पद्यते यदनुरोधेन तस्या विशेषणत्वादिकं कल्प्येत तथाऽपि चरमज्ञानव्यक्तेरपि यावत्स्वावस्थानं घटादेरिव ब्रह्मणि कल्पितत्वेन तयैवावच्छेदान्न शुद्धविषयकत्वमिति नोपाधिभावो न च ज्ञानाज्ञानयोः समानविषयकत्वनिबन्धनबाध्यबाधकभावसंभवः। किंच चरमज्ञानव्यक्तिकल्पिका अविद्या किं स्वतस्सिद्धा वा कल्पिता वा तत्राद्ये अद्वैतभङ्गः। द्वितीये तु तत्कल्पकमपि कल्पनीयमथ तत्कल्पकमपीत्यनवस्था, कल्पनापरम्परयैव च सर्वकालनयनेनानिर्मोक्षोनिद्राऽनुपपत्तिः कल्पनापरम्परातिरिक्तव्यवहारानुपपत्तिश्च॥ क्वचिदपि विश्रामे वा कल्पकासत्त्वे कल्पनाऽनुपपत्त्या व्यवहारोच्छेदः। कल्पनायाः स्वपरनिर्वाहकत्वे तु किं तत्स्वपरनिर्वाहकत्वमिति निर्ब्रूहि स्वव्यवहारे परानपेक्षत्वं तदिति चेत्तर्हि कल्पनाया अकल्पितत्वमापद्यते, न हि स्वपरनिर्वाहकत्वादतिरिच्यते अकल्पितत्वं, यथा हि स्वपरनिर्वाहिका चितिशक्तिरकल्पिता तथैव चेत्कल्पनाऽपि तर्ह्यकल्पितद्वयाङ्गीकार इति स्पष्ट एवाद्वयवादभङ्गः। यदि तु स्वपरनिर्वाहकत्वमपि कल्पितमिति स्वपरनिर्वाहकं भवदप्यज्ञानं नाद्वयवादभङ्गायेति मन्यसे, मन्यसे च तस्य स्वपरव्यवहारनिर्वाहार्थमेव कल्पितत्वेन तद्व्यवहारपर्याप्तत्वं च तर्हि कल्पितेयं स्वपरव्यवहारनिर्वाहकता कल्पिताऽथवा स्वतःसिद्धेति पुनरनुयोगस्तदवस्थ एव, अस्ति चेतदनुबन्धिनां पूर्वोक्तदोषाणामप्यवसर इति न किंचिदेतत्।

अज्ञानस्येश्वरकल्पितत्वेनाधिकसत्ताकतया अज्ञानमकल्पयतामपि जीवानां तदज्ञानोपादानकाः पदार्था भवन्ति व्यावहारिका इति नाज्ञानपरम्परोपनिपात इति तु सिद्धान्तविरुद्धमज्ञानस्य जीवो-

पार्थिवत्वेनेश्वरकल्पितत्वाभिधानासङ्गतेः । ईश्वरकल्पितत्वेऽप्यज्ञानस्य विक्षेपशक्तिरेवेश्वरसंस्पर्शिनी आवरणशक्तिस्तु तत्राकिंचित्करीति न क्षतिरित्यपि न वाच्याय ईश्वरस्यैव कल्पितत्वेन भवन्मते तत्कल्पितपदार्थानामकल्प्यमानानां व्यवहारपर्याप्तत्वाभिधानासङ्गतेः, न हीश्वरस्य कल्पितत्वे तत्कल्पिताज्ञानोपादानकाः पटादयः पुनरकल्पिता इति सांप्रतं सम्भावयितुमपि ।

एतेन परमतेऽपि बीजाङ्कुरादिस्थलेऽनवस्थायाः सोढव्यतया अज्ञानकल्पनपरम्पराऽस्मन्मते तत्समानेति न दोषाधानायेति निरस्तम् । अज्ञानकल्पनपरम्परयैव सर्वकालस्य नीतत्वेनाज्ञानोपादानकघटादिद्वारा व्यवहारानुपपत्तेरेव दोषतयोत्कीर्तनात् । अनिर्मोक्षप्रसङ्ग—निद्राऽनुपपत्त्यादिकं तु अज्ञानकल्पनपरम्परानुधावने यथा दोषस्तथा न्यरूपयाम एव पूर्वमिति सुस्पष्टमेव ॥

प्रकृतमनुसरामः—उत्पत्त्यनन्तरमपि चरमव्यक्तिस्वभावकृत इति पक्षोऽपि दुःस्थ एव चरमज्ञानव्यक्तेरप्यज्ञानोपादानकतया घटादेरिव तस्या अपि स्वावच्छिन्नचैतन्येऽध्यस्ततया तस्या उपाधिभावस्याकस्मिकत्वापत्तेः ।

ब्रह्मस्वभावकृत उपाधिभावश्चरमज्ञानव्यक्तेरिति चरमपक्षोऽपि दुर्भणः, ब्रह्मण एकरसस्वभावत्वेन तथा सति ब्रह्मणि कदापि कस्याश्चिदपि व्यक्तेर्विशेषणत्वोपलक्षणत्वाभिधानासङ्गत्या ब्रह्मण्यावरणाभिधानासंभवात् ॥ आवरणाङ्गीकारे वा तस्य स्वाभाविकत्वेन तन्निवृत्त्युपायासंभवात् ॥

कार्यकारणयोरप्यग्निसंयोगपटयोस्तादृशविरोधदृष्टेश्चेति तु सर्वथाऽनवधाननिबन्धनमेवाभिधानं तथा हि पटं दहन्तोऽग्निपर-

माणवः पटद्व्यणुकेषु प्रविशन्तः पूर्वसंस्थानविजातीयसंस्थानमारभमाणा एव लब्धस्वव्यापारा इति पटजनकावयवविश्लेषपूर्वकत्वात्पटदाहो नान्तरा पटासमवायिकारणसंयोगोत्पादम् । एवमेव तु धानासु भर्जनानन्तरं पूर्वसंस्थानवैजात्यात्स्थौल्योपलम्भो, न हि धानावयवेषु यथापूर्वं संयोगवत्सु स्थौल्योपलम्भसंभवः । एवं चाग्निसंयोगेन पटनाशस्थलेऽप्यवयवविश्लेषादेव पटोत्पादो न समवायिकारणनाशात् । न च धानास्ववयवसंयोगोत्पादो न धानारम्भकावयवविश्लेषपूर्वकः किन्तु धानानारम्भकोदासीनसंयोगनाशपूर्वक एव, एवमेव तु भृष्टासु धानासु धाना भृष्टा न तु नष्टा इति सर्वलोकानुभवोऽन्यथा नष्टा इत्येव प्रतीतिः स्यादिति वाच्यं धानासु भर्जनानन्तरं गुरुत्वापायदर्शनेन भर्जनेन धाना* ध्वंसस्यावश्यमभ्युपगन्तव्यत्वात् । एवं च यथा तेजःपरमाणवोऽतिगत्वरास्त्वरया धानावयवान् भर्जयन्ति तथैवातिवेगेन पटावयवान् विश्लेष्य पटमपि ध्वंसयन्ति । इतरथा तु मूर्तानां समानदेशताविरोधात्पार्थिवपरमाणववष्टब्धदेशे तेजःपरमाणूनामनपसारितपार्थिवपरमाणूनामन्तः प्रवेशनासंभवेन अन्तर्देशावच्छेदेन पटदाह एवाभावीति सुव्यक्तमेव । दग्धपटे पूर्वसंस्थानानुवृत्तिदर्शनाभिधानं तु सर्वथा हासायैव चक्षुषा सूक्ष्मवीक्षकयन्त्रादिना च दग्धपटे संस्थानवैजात्यस्य प्रत्यक्षसिद्धत्वात् । मौञ्जरज्ज्वादिस्थले जातेऽपि दाहे पूर्वसंस्थानदर्शनाभिमानस्तु पूर्वसंस्थानसौसादृश्यादेव न संस्थानैक्यादितरथा रज्जोरन्तरवयवानामदाहप्रसङ्गः इत्युक्त-

* सान्द्रसंयोगवत्सु पदार्थेषु जातोऽग्निसंयोगः पदार्थं स्थूनयति यथा तण्डुलेषु धानासु च प्रशिथिलसंयोगवत्सु चाग्निसंयोगोऽपकर्षहेतुर्यथा वृन्ताक–कारवेल्लादिषु, तथा च परिमाणभेदस्येव गुरुत्वान्तरकार्यग्रहणस्यापि द्रव्यभेदव्याप्यत्वेन धानासु भर्जनं पूर्वसंयोगविजातीयसंयोगजनकतया तादृशसंयोगस्य च द्रव्यनाशव्याप्यतया द्रव्यध्वंसहेतुरिति भावः ।

प्रायमेव । मुद्गरचूर्णीकृतघटतदवयवविभागादर्शनेन तच्चावयववि-भागादिकल्पनाया अप्रामाणिकत्वाभिधानं पुनरप्ययस्याप्ययायेव तथा हि मुद्गरविनिपातः किं संयुज्जानेष्वेव घटावयवेषु घटं नाशयति उतासंयुज्जानेषु तत्र नाद्यः घटसंस्थानेऽनुवर्तमाने घटनाशकल्प-नाया अत्यन्तायुक्तत्वात् । नापि द्वितीयः घटस्यासंयुज्जानावस्थत्वे अवयवसंस्थाननाशस्य हेतुतया असमवायिकारणनाशादेव कार्यना-शस्यागत्याऽङ्गीकरणीयत्वापातात्, अत एव तु मुद्गरस्य यावता कपालदेशेन संबन्धस्तावानेव देशो विशीर्यते नेतर इति नियमः, असंयुज्जानावस्थकपालद्वये ध्रियमाणेऽपि घटो नष्ट इति व्यवहा-रश्च भवति प्रामाणिकोऽन्यथा तु समवायिकारणकपालद्वयसद्भावे कथं घटनाशः स्यात् ।

मुद्गरचूर्णीकृतघटतदवयवविभागादर्शनं तु कार्यस्य नाशम-वायिकारणनाशनाश्यत्वाभावे घट—तदवयवविभागाभावे वा मान-भावमुपयाति जातेऽपि घट—तदवयवविभागे कार्त्स्न्येन तदवय-वानां रजोभावावस्थिततया सर्वथा घटावयवसंस्थानापगमे घट—त-दवयवविभागव्यवहाराभावात् । अथवा घट—तदवयवविभागव्यव-हाराभावो घनासारसंपातविनिर्मुक्तोदविन्दुवत्समानाभिहारकृत एवा-स्तु मुद्गरनिपातेन घटारम्भकसंयोगप्रतिद्वन्द्विविभागजननेऽपि धूलि-भावमुपगच्छतां घटावयवानां संयोगान्तरारम्भेण विभागान्तरशत-जननेन चोपलब्धुमशक्यत्वात् ।

न ह्युदविन्दवो न वृष्टा इति नोपलभ्यन्ते किन्तु सन्तोऽपि दोषवशादेवमिह जातेऽपि विभागे घटावयवानाकलनदोषाद्वा विभा-गान्तरशतोपनिपातदोषाद्वा तदग्रह इति न किञ्चिदेतत् ॥

यद्यप्यप्पयदीक्षिताः परमाभिनिविष्टाः—नापि तत्र तन्तूनामपि दाहेन समवायिकारणनाशात्पटनाश इति युक्तम्। अंशुतन्त्वादिभिः सह युगपदेव पटस्य दाहदर्शनेन क्रमकल्पनाऽयोगात्। यतो वस्त्रांशावयवनाशस्तत्रावयवेऽग्निसंयोगादेव नाशस्य वाच्यत्वादित्यब्रुवंस्तदेतदतिमन्दं सावयवेषु द्व्यणुकपर्यन्तेष्वग्निसंयोगस्य क्रमेणैव वाच्यतया भवतोऽप्यवयविनाशस्यावयवनाशपूर्वकतायाः अवश्यं कल्पनीयतया अवयवनाशस्य चासमवायिकारणनाशादेव वाच्यतया अंशुतन्त्वादिभिः सहाक्रमेण युगपत्पटनाशस्य वक्तुमशक्यत्वात् ।

न ह्यत्यन्तगत्वर्या विद्युतोऽपि विलसितान्यक्रमाणीति संभाव्यते यतो विद्युदपि पूर्वदेशमनतिक्रम्यैवोत्तरदेशे स्वसंयोगमासादयति, न हि द्वयोः सावयवयोरक्रमिकः संयोग इति संभावयत्यपि प्राज्ञः, एवं चाग्निसंयोगस्य पटावयवेषु क्रमिकतया सत्कार्यवादिनो भवतोऽपि असमवेतभावकार्यानुत्पादानुरोधेन व्यवहारदशायां कार्यनाशस्य सावधिकतायाः अवश्यमभ्युपेयतया च क्वचिदप्यवयवे नाशविश्रान्तेः कल्पनीयतया अन्तिमस्य तादृशावयवस्य चानश्वरत्वेन तादृशानश्वरावयवद्वयसंयोगनाशपूर्वकतायाः पटनाशे भवतोऽप्यगत्याऽङ्गीकरणीयत्वापातः । न हि व्यवहारदशायां सत्कार्यवादावधीरणा वा कार्यस्य निःशेषनाशाङ्गीकारोऽपि वा भवतोऽपि नये। तस्मात्पटस्यांशुतन्त्वादिरूपेण यौगपद्येनाक्रमिकनाशमभ्युपेत्य दृष्टान्तसौष्ठवसंभावनया ब्रह्मज्ञानेन ब्रह्माज्ञानस्य सकारणकनाशोपवर्णनं न केवलं युक्तिविरुद्धं किन्त्वद्वयवादसिद्धान्तविरुद्धमपीत्यवहिता विदाङ्कुर्वन्तु ।

वस्तुतस्तु नाशो नाम न कश्चिदभावो वैशेषिकाणामिव किन्तु कार्यस्य कारणरूपेणावस्थानमेव तच्चावस्थान्तरावाप्तिलक्षणमेव

अवस्थान्तरावाप्तिश्च कालिको विशेषः । विशेषः कालिकोऽवस्थेति हि कोशकाराः । एवमेव तु णश् अदर्शने इति धात्वर्थानुस्मरणमभियुक्तानामन्यथा तु णश् जन्याभावे इति स्यात् । एवं च पटो नश्यन्नैकान्ततोऽपैति किन्त्ववस्थान्तरमाप्नोति । एवं च ब्रह्मज्ञानेन ब्रह्माज्ञाननाशे ब्रह्माज्ञानस्यावस्थान्तरावाप्तिरेव भविन्री, सा पुनः कालिकविशेषस्वरूपेति ब्रह्मज्ञानेन ब्रह्माज्ञाननाशो नाम ब्रह्माज्ञानस्य कश्चन कालिको विशेष इति किं तेन तेऽभीष्टसंभावनापीति विहितगुरुकुलश्रमाः कृतधिय एवावधारयितुं पारयन्ते नेतरे इति किं ब्रूमः ॥

यदपि स्वनिवर्तकत्वे स्थितिविरोधः । स्वोपादाननिवर्तकत्वं त्वदृष्टचरमिति पूर्वपक्षतयोपक्षिप्य अन्यत्रादृष्टस्यापि प्रमाणबलादत्रैव कल्पनात्, तथा हि मायां तु प्रकृतिं विद्यादित्यवगतमायोपादानकत्वस्यात्मतत्त्वसाक्षात्कारस्य तरति शोकमात्मविद् । सोऽविद्याग्रन्थिं विकिरतीह सोम्येत्यादिना तन्निवर्तकत्वस्य प्रमितत्वादित्यन्तः समाधानसंरम्भः सोऽपि स्वगोष्ठीसंकेतमात्रस्वरूप एव, न हि मायाशब्दोऽवस्तुभूतार्थपरः देवमायेव निर्मितेत्यादौ माया—शब्दस्य विचित्रवस्तुबोधकतायाः संप्रतिपन्नत्वात् माया ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ इति सर्ववेदान्तोपबृंहणस्वरूपया गीतया मायाया गुणमय्याः सत्त्वरजस्तमोरूपत्वोत्कीर्तनेन भगवत्प्रपत्तिमात्रापनोद्यत्वाभिधानेन च वस्तुस्वरूपत्वसिद्धौ मिथ्यारूपत्वाभिधानासङ्गतेः । न हि मिथ्याभूतस्य शुक्तिरूप्यादेर्निवृत्तये गुरूपसत्तिर्वा भगवत्प्रपत्तिर्वाऽपेक्ष्यते अज्ञानस्य ज्ञानैकापनोद्यत्वात् । न च भगवान् कृष्णोऽपि भवतः पदार्थान्तरविलक्षणः शक्तिशालीत्यभिमतं येन तत्प्र-

त्या ज्ञानोदयसम्भावनापि स्यात् । तस्यापि घटादेरिव त्वयैव कल्पितत्वात् । ततश्च देवतान्तरप्रपत्त्यपेक्षया स्वप्रपत्तौ वैजात्यमभिधित्सोर्भगवतः श्रीकृष्णस्य मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ इत्यभिधानास्वारस्यमपि स्पष्टमेव । एवमेव तु मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति बादरायणीयेषु कार्त्स्न्येन स्वरूपानभिव्यक्त्यैव मायास्वरूपत्वाभिधानोक्तिः सङ्गच्छते इतरथा तु मायामात्रं तु ज्ञानैकापनो*द्यत्वादित्येवासूचयिष्यद् बादरायणोयद्यभिप्रैष्यन्मिथ्यारूपतां मायायाः । एवं च फलमत उपपत्तेरित्युक्तरीत्या मोक्षस्य भगवत्प्रसादलक्षणस्य प्रपत्त्येकसाध्यत्वाद् वाक्योत्थज्ञानमात्रस्य मोक्षसाधनतामवधार्य तरति शोकमात्मवित् सोऽविद्याग्रन्थिं विकिरतीत्यादि यथाश्रुतश्रुत्युपन्यासमात्रेण जगन्मिथ्यात्वमभिमत्य युक्तिविरुद्धं स्वस्य स्वनिवर्तकत्वाम्नानं वा स्वोपादाननिवर्तकत्वाभिधानं वा न युक्तमिति युक्तिकोविदाः । यथा च मोक्षान्यथाऽनुपपत्तिर्नै मानं तथा न्यरूपयाम पूर्वमेव । जगन्मिथ्यात्वबोधकत्वेनापाततो भातानां श्रुतीनामर्थस्तु स्वावसरे निरूपयिष्यते इति सर्वं चतुरस्रम् ॥

यदपि महत्या आरभट्या वृत्तिप्रतिबिम्बितचितो निवर्तकत्वे तु नोक्तवचसः शङ्का—तदुक्तं ॥ तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत् ॥ सूर्यकान्तमुपारुह्य तं न्यायं विनियोजयेत् ॥ न चाऽपरोक्षवृत्तौ सत्यां चिदप्रतिबिम्बनिबन्धननिवृत्तिविलम्बादर्शनात् न विशिष्टे निवर्तकतेति वाच्यम् ॥ शुद्धजडस्य शुद्धचितश्च जडतया तद्भासकतया चाज्ञानानिवर्तकतया विशिष्टे निवर्तकताया आवश्यकत्वात् ॥ यत्तु निवर्तकं ज्ञानमपि न शुद्धविषयकम् ॥ तस्यादृश्यत्वात् ॥ नापि विशिष्टविषयकम् ॥ तस्याऽध्यस्तत्वेन भ्रमत्वापत्तेरिति ॥ तन्न ॥

* एतत्तत्वमधिकृत्यापि पराक्रान्तमस्माभि–रिति–तत्ततोऽवधेयम् ।

उपहितस्य विषयत्वेऽपि उपाधेरविषयत्वेनाभ्रमत्वात् ॥ यत्त्वन्त्यज्ञानस्य किं निवर्तकं स्वयमन्यद्वा ॥

नाद्यः ॥ अन्यनिरपेक्षप्रतियोगिनो ध्वंसजनकत्वे क्षणिकत्वापत्तेः ॥ दग्धदारुदहनस्यापि—ईश्वरेच्छादिनैव नाशात् ॥ नान्त्यः ॥ शुद्धात्मनः किञ्चिदपि प्रत्यहेतुत्वात् ॥ तदन्यस्य च निवर्त्यत्वादिति तन्न ॥ तन्तुनाशस्य पटनाशप्रयोजकत्वादर्शनेन स्वोपादानाविद्यानाशस्यैव तन्नाशकत्वात् ॥ न चाविद्यानाश उपलक्षितात्मा वा वृत्तिर्वा पूर्वंच शुद्धस्याहेतुत्वम् ॥ द्वितीये प्रतियोगिमात्रस्यैव नाशकतात्पर्य्यं स्थानमिति वाच्यम् ॥ उभयथाऽप्यदोषात् ॥ वृत्तिमादायैव ब्रह्मण उपहितत्वेन शुद्धत्वात् ॥ प्रतियोगिनः प्रतियोगित्वेन नाशकतायामितरानपेक्षत्वे हि क्षणिकत्वं रूपान्तरावच्छेदेन यत्कारणं तस्यापेक्षणे न तदिति उपादाननाशत्वावच्छिन्नस्य स्वस्यैव क्षणिकत्वानापादकं नाशकत्वं स्यात् ॥ द्वितीयकारणनिरपेक्षप्रतियोगिनः प्रतियोगित्वोपादाननाशत्वरूपद्वयावच्छिन्नस्य नाशकत्वोपपत्तेः ॥ वस्तुतस्तु अविद्यानिवृत्तेर्वृत्तिरूपतया न निवर्तकखण्डनावकाशः ॥ वृत्तिनिवृत्तेरात्मरूपतया न तज्जनकखण्डनावकाशोऽपीति सर्वमवदातम् ॥ इति तदेतत्स्वमतावेशवैवश्यमात्रं युक्तिविरुद्धम् । तथा हि विशिष्टे निवर्तकत्वाङ्गीकारे तन्निवर्तकं किमपरमिति वद, न हि निवर्तकं विशिष्टं न निवर्त्यं यतस्तत्र निवर्तकान्तरं नापेक्ष्येत । यदि तु विशिष्टं स्वयमेव निवर्तेत तदा पुनर्न कदाऽपि चिदवच्छिन्नं जडमवतिष्ठेतेति जगदनुत्पाद इत्यसकृदावेदितमेव। किंच निवृत्तेरपि कल्पितत्वेन तत्स्वरूप—तदुत्पत्तिनिनाशानामपि काल्पनिकत्वात्तन्निवृत्तिरप्यपेक्षितेति एवं तस्य तस्यापि निवृत्तिरित्यनवस्थापङ्कनिमग्नोऽसि अनवस्थापरिहाराय

निवृत्तेर्ब्रह्मरूपत्वाङ्गीकारे तु ब्रह्मरूपायां निवृत्तावनुवर्तमानायां कथं जगदुत्पद्येतेति व्यवहारोऽपि न सिद्ध्येत् । इदमत्रावधेयं विशिष्टस्य निवर्तकत्वे विशिष्टं न विशेषणविशेष्यावेव तयोरौदासीन्येन निवर्त्यनिवर्तकभावासम्भवात्, भास्यभासकभावाभ्युपगमेन तयोर्निवर्त्यनिवर्तकभावोत्त्यसम्भवाच्च । किन्तु विशिष्टमतिरिक्तं तदपि च न सामान्यतो जडावच्छिन्नं चैतन्यं चैतन्यावच्छिन्नं जडमेव वा चैतन्यस्य जडभासकत्वात्किन्तु चरमवृत्त्यात्मकजडावच्छिन्नचैतन्यस्य निवर्तकता वक्तव्या । वृत्तौ चरमत्वं च वृत्तिप्रागभावानधिकरणक्षणवृत्तित्वम् । एवं च वृत्तिप्रागभावानधिकरणक्षणवृत्तित्वान्नाशकत्वं, नाशकत्वेन च वृत्तिप्रागभावानधिकरणक्षणवृत्तित्वमितीतरेतराश्रयः । नाशकतावच्छेदककुचिनिक्षिप्तस्य क्षणस्य च नाशः केन वक्तव्यः कीदृशः स इत्यादिकं च पूर्वोपनिबद्धं चोद्यजातमिहोपसरणीयं भवति । कार्यं हि निवर्तमानं कारणरूपतामुपयाति न तु सर्वथा अपैति बाध्यते वा अपरथाऽसद्वादाभ्युपगमप्रसङ्गात् । न ह्यत्यन्तासदपि च प्रतीयतेऽपि च बाध्यते चेत्यन्तविप्रतिषिद्धमङ्गीकर्तुं युक्तं, न चाद्यन्तयोरसद् यत्तन्मध्ये* सदित्यवकल्पते । सत्त्वेन भासेत वा नरशृङ्गस्यापि सत्त्वप्रसङ्गात् । सत्त्वेन भानप्रसङ्गाच्च । न हि निरन्वयोत्पादविनाशौ बौद्धबुद्धिमननुसरता प्रामाणिकेनाङ्गीकर्तुं शक्यौ । बौद्धोहि शून्यस्य तत्त्वरूपतामाकलय्य जगतः पूर्वोत्तरकालयोरभावरूपतामवबुध्य मध्ये सांवृत्तिकं जगत्सत्त्वमातिष्ठते इत्यभावात्मनो जगतः शून्या†न्वयित्वेन शून्यरूपतां साहसि-

* युक्तिरूप्यं तु यथा न सिद्ध्यति तथा स्वावसरे निरूपयिष्यते इति भावः ।

† वस्तुतस्तु बौद्धस्यापि शून्यस्यैव तत्त्वरूपतामातिष्ठमानस्य कार्यमात्रस्याद्यन्तयोः शून्यरूपतया भवेतामेव शून्येनान्वयव्यतिरेकाविति न निरन्वयोत्पादविनाशशङ्कावसरः, यतः सतः सत्त्वमेव तत्त्वमसतश्चासत्त्वमेव इत्यसतो जगतोऽसत्त्वेव अस-

कतया भाषितापि । न पुनर्वैदिको निरन्वयोत्पादविनाशावभ्युपगन्तुं पार्यते । यदि तु सत्समुद्भूतस्य सत्येव ब्रह्मणि विलयमुपगच्छतो जगतः स्तस्तावत् सान्वयावेवोत्पादविनाशाविति न किञ्चिदिदमाक्षेपजातमिति ब्रूषे तर्हि सन्मात्राङ्गीकारेऽनुभूयमानजगद्व्यवहारोच्छेदः । सन्मात्रस्याप्यविद्याविशेषवशाद्वैचित्र्यमिति तु पुनरनभिज्ञभणितं सन्मात्रे निर्विशेषे अविद्याविशेषस्याकस्मिकत्वात् । अविद्यायाः पूर्वपूर्वाविद्याप्रभवत्वपक्षं तु पूर्वमेव निरास्थमिति तत्रैव द्रष्टव्यम् । अविद्यायाः स्वपरनिर्वाहकतापक्षोऽपि च यथा दुःस्थस्तथाऽर्वागेव न्यरूपयम् । एवं च निरन्वया अविद्येति व्यक्तमुक्तं भवति । विनाशोऽपि च तस्या निरन्वय एव न हि ब्रह्मात्मकस्तद्विनाश इति युक्तं वक्तुं तथा सति ब्रह्मात्मकाविद्यानाशे ध्रियमाणे अविद्या नात्मानमासादयेन्न हि स्वप्रणाशे स्वोत्पत्तिरवकल्पते । न चाविद्याया अनादित्वाभ्युपगमेन निरन्वयत्वं न दोषायेति वाच्यम् अनादेर्भावस्य नाशायोगेन तथा सत्यविद्याया ज्ञाननाश्यत्वायोगात् । यदि त्वविद्याया भावाभाववैलक्षण्येन नैतच्चोद्यावतारः—यथोक्तमद्वैतविद्याचार्यैः—नासद्रूपा न सद्रूपा माया नैवोभयात्मिका । सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी ॥ इति । न च निरन्वयविनाशोऽपि तस्यास्तद्विलयस्य ब्रह्मात्मकत्वाभ्युपगमादित्युच्यते तर्हि कथमसतः सज्जायेतेत्यादिश्रुत्युपरोधः । नासतोऽदृष्टत्वादिति ब्रह्मसूत्रविरोधश्च । अत्र हि जगतोऽसत्कारणकत्वं निराक्रियते तच्च निराक्रियमाणमसत्कारणकत्वं क्वचिदप्यप्र*तीयमानसत्त्वककारणकत्वं तदा कस्य

---

ताऽनुगतत्वं निर्विशेषब्रह्मवादिनस्तु वैदिकस्य सतः सर्वथाऽपि सत्कारणकतापक्षः समर्थनीयो भवति न च निर्विशेषं तत्तथा सविशेषं तु तद् ब्रह्म भवदपि कल्पितमिति भवति कल्पना निरन्वयोत्पादविनाशेति निरूढगदितम् ॥

* असविषयत्वस्य केवलान्वयित्वेन सतोऽप्यसत्त्वप्रकारकज्ञानविषयत्वमसतश्च

मतनिराकरणपरमिदं वचनजातमित्युच्यतां न हि माध्यमिकमतनिराकरणपरता तथा सति निर्वहति· माध्यमिकेन सर्वशून्यवादिनाऽपि पदार्थानां व्यवहारकाले सांवृतिकसत्त्वाङ्गीकारात् । ततश्च वस्तुगत्या यदसत्तत्कारणकत्वं श्रुतिसूत्रादिनिराकरणीयमित्यवश्यमङ्गीकरणीयम्, एवं च यस्य मते अविद्यात्मकं सर्वजगत्कारणमसदपि सत्त्वेन प्रतीयमानमेव केवलं तन्मतनिराकरणपरत्वाङ्गीकारे माध्यमिकसाधारण्येन अनिर्वाच्यकारणवादोऽपि निराकृतो भवति । अत एव तु यादृशं ब्रह्मणः सत्त्वं तादृशं स्याज्जगत्यपि । तच्च स्यात्तदनिर्वाच्यं चेदिहापि तथाऽस्तु नः ॥ इति ब्रुवाणा भेदवादिनं परिहसन्तो निर्विशेषब्रह्मवादिनो ब्रह्मणः सत्त्वाद्विलक्षणं प्रतीयमानतैकसारं सत्त्वं जगत्कारणस्याचक्षते । एवं च सांवृति*कसत्त्वस्य माध्यमिकेनाप्यङ्गीकरणीयतया तादृशस्यैव च सत्त्वस्य भवताऽप्यभ्युपेयतया भवति भवन्मतं श्रुतिसूत्रविरुद्धमिति कृतधियोऽवधारयन्ति ।

अत एव तु वस्तुनस्तत्त्वातत्त्वयोर्ज्ञाननैरपेक्ष्येण वस्तुतन्त्रतामभिप्रयती श्रुतिः सदेव सोम्येदमग्र आसीदिति सृष्टेः पूर्वं ज्ञाननिरपेक्षं वस्तुतन्त्रं कार्यस्य सत्त्वं व्यवस्थापयति इतरथा तु सदेव सोम्येदमग्र्यायत इति ब्रूयादियं श्रुतिः यस्य तु मते उत्पत्त्यनन्तरमपि कार्यमसदेव जगतो मिथ्यात्वात्तन्मते । सदेवेत्यवधारणस्य कार्यस्योत्पत्तेः पूर्वमसद्रूपतानिराकरणपरत्वं न संभवति । भवेदेतदेवं यदि जगत् सत्स्यात्कदाचिदपि । सदेवेत्यस्य जगतो व्याव-

सत्त्वप्रकारकज्ञानविषयत्वमिति कदाचिदसतोऽपि क्वचित् सत्त्वेन भानसम्भवात् क्वचिदप्यप्रतीयमानसत्त्वककारणकत्वं यथाश्रुतं दुर्घटमित्यन्यथैवेदं परिष्करणीयमिति तात्पर्यम् ।

* यथोक्तं धर्मकीर्तिना द्वे सत्त्वे समुपाश्रित्य बुद्धानां धर्मदेशनेति ।

हारिकसत्त्वसमर्थनपरत्वमप्यसंभवि सृष्टेः पूर्वं व्यवहारस्यैवासत्त्वात् । किंच असदेवेदमग्र आसीदिति श्रुत्या यादृशमसत्त्वं बोध्यते तत्प्रत्यनीकमेव सत्त्वं सदेवेत्यनया प्रमापणीयमसदेवेति च श्रुतिर्न व्यावहारिकमसत्त्वं सृष्टेः पूर्वं जगतो बोधयति तथा सति श्रुतेरपार्थकत्वप्रसङ्गात् । सृष्टेः पूर्वं व्यवहाराभावे व्यावहारिकासत्त्वस्य परेणापि सोढव्यत्वात् । तथा च असदेवेति श्रुतिः सर्वथा असत्त्वं जगतो ब्रूते सदेवेति च तत्प्रत्यनीकस्वभावं सत्त्वमिति सुव्यक्तमुपपादितं भवति । एवं च सदेव सोम्येदमग्रआसीदिति श्रुत्या वैशेषिकाणां कालिकाव्याप्यवृत्तिकार्यसत्त्ववादोजगन्मिथ्यात्ववादिनां दृष्टिसृष्टिवादः सृष्टि*दृष्टिवादो वा । माध्यमिकानां सर्वशून्यतावादोऽथवा योगाचाराणां माध्यमिकानां च सांवृत्तिकसत्त्ववादः पराकृतो भवति । तद्यथा अग्रे इति वदन्ती श्रुतिः सृष्टेः प्राक् काले इदं—शब्दनिर्देश्यस्य जगतः सद्रूपतां बोधयन्ती कार्यस्य कालिकाव्याप्यवृत्तिसत्तावादि†नस्तार्किकस्य पक्षं निराकृतवती । सदेवेति सावधारणतया ब्रुवाणा च दृष्टिसृष्टिपक्षं सृष्टिदृष्टिपक्षं जगन्मिथ्यात्वपक्षं चाक्षिपति—सदेवेदम्—जगत् न तु ज्ञातमात्रसत्ताकमसद्भूतमतत्त्वकं मिथ्याभूतं वा । न च सदेवेति निर्विशेषस्वरूपता प्रतिपिपादयिषिता तथा सति अग्रे इत्यभिधानानुपपत्तेः । अग्रे इति हि कालविशेषावच्छेदेन सद्रूपतामवगमयति कालविशेषावच्छिन्नं च न भवितु-

* यद्यपि सृष्टिदृष्टिवादे जगत्सत्यत्ववादिनामिव जगदिदं परमेश्वरसृष्टमज्ञातसत्ताकमेव तत्तद्विषयसंनिकर्षप्रमाणावतारे तस्य तस्य विषयस्य सिद्धिरित्यभिसन्धिरत एव च शुक्तिरूप्यवत्कल्पनासमसमयत्वाभावनिर्वाहोऽपि तथाऽपि अद्वयवादभङ्गभीत्या ईश्वरः स्वेन कल्पितत्वाङ्गीकारेण सृष्टिदृष्टिवादोऽपि दृष्टिसृष्टिवादपक्षपर्यवसायीति दृष्टिसृष्टिवादनिरासेन सृष्टिदृष्टिवादनिरासोऽप्यावश्यक इति निगूढतात्पर्यम् ।

† यस्य तु कार्यं मिथ्यैव तस्योत्पत्तेः पूर्वं पश्चादपि चासत्त्वाच्च तार्किकपक्षाक्षेपसम्भवोऽपि ।

मर्हति निर्विशेषम् । किंच सृष्टेः पूर्वं निर्विशेषमपि चेत्सविशेषभावमुपगतं ब्रह्म तर्हि तस्य निर्विशेष*स्वरूपता अकिंचित्करी । एवं च सति मोक्षस्याप्यनभ्यर्थनीयता प्र†सङ्गः निर्विशेषसन्मात्रस्य सतो ब्रह्मणः संसारयोगश्चाकस्मिकः प्रसज्येत । प्रलयेऽपि सुसूक्ष्मदशापन्नाविद्यादियोगाङ्गीकारे तु निर्विशेषतैव तस्य कीदृशीत्यवश्यं दृष्टेः प्रागपि सविशेषस्वभावं ब्रह्मेत्यगत्याऽङ्गीकरणीयम् ।

तत्सुष्ठूक्तं दृष्टिसृष्टिवाद—सृष्टिदृष्टिवाद—जगन्मिथ्यात्ववादयोगाचारमतप्रत्याचिख्यासया सदेवेति प्रववृते श्रुतिरिति । सदसतोः संबन्धानुपपत्त्या च कदाचिदपि सत्तायोगिनोनासत्त्वप्रसङ्ग इति शून्यवादोऽपि स्पष्टं पराकृतो भवति ॥

यदपि‡ केचन विश्वमिथ्यात्वसमर्थनाय यतमानाः पूर्वोत्तरप्रकरणतात्पर्यमावृत्य अनादृत्य च सर्ववेदान्तानां तात्पर्यमेवमाहुः—सदेव—सदित्यस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतम् एकं निरञ्जनं विज्ञानं यदवगम्यते सर्ववेदान्तेभ्यः । एव—शब्दोऽवधारणार्थः । किं तदवध्रियत इत्याह इदं जगन्नामरूपक्रियावद्विकृतमुपलभ्यते यत्तत्सदेवासीदित्यासीच्छब्देन संबध्यते कदा सदेवेदमासीदित्युच्यते अग्रे जगतः प्रागुत्पत्तेः ।

किं नेदानीमिदं सदेनाग्र आसीदिति विशेष्यते न कथं तर्हि विशेषणम् इदानीमपीदं सदेव किन्तु नामरूपविशेषणवदिदं—शब्द—बुद्धिविषयश्चेतीदं च भवति प्रागुत्पत्तेस्त्वग्रे केवलसच्छब्दबुद्धिमात्रगम्यमेवेति सदेवेदमग्र आसीदित्यवधार्यते । न हि

---

* निर्विशेषं सदपि चेदकस्मादेव सविशेषं तर्हि निर्विशेषतायै कृतोयत्नोनिरर्थक एव स्यादिति रहस्यम् ।

† तथा सति मुक्तोऽपि संसरेदिति भावः ।

‡ श्रीमच्छङ्कराचार्याश्छान्दोग्योपनिषद्भाष्ये ।

प्रागुत्पत्तेर्नामवद्रूपवद्वेदमिति ग्रहीतुं शक्यं वस्तु । सुषुप्तकाल इव यथा सुषुप्तादुत्थितः सत्त्वमात्रमवगच्छति सुषुप्ते सन्मात्रमेव केवलं वस्त्विति तथा प्रागुत्पत्तेरित्यभिप्रायः । इति, तदेदालोचयामः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानसंरक्षणार्थमयं ग्रन्थ आरब्धः । तत्सिद्ध्यर्थमेव च कार्यकारणयोरभेदव्यवस्थापनप्रयत्नः । तच्च कार्यस्यासत्त्व इव मिथ्यात्वेऽपि नोपपद्यते न ह्यधिष्ठानज्ञानेनाध्यस्तज्ञानसम्भवोज्ञातशुक्तितत्त्वस्य रजतज्ञानादर्शनात् लोकेऽधिष्ठानज्ञानेनाध्यस्तज्ञानव्यवहारादर्शनाच्च ।

प्रत्युताधिष्ठानज्ञानकाले शुक्तिमज्ञासिषं न तु रजतमिति विपरीतव्यवहारो दृश्यते । किं च लौकिकपरीक्षकाणां यत्रार्थे बुद्धिसाम्यं सोऽर्थो दृष्टान्तो भवति निर्दिशति च श्रुतिर्भगवती यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं ज्ञातं भवति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति ब्रुवाणा मृत्पिण्डदृष्टान्तं, न च लौकिका घटशरावादेर्मृदतिरेकेण मिथ्यात्वं प्रतिपद्यन्ते किन्त्वभेदमिति मिथ्यात्ववादो दृष्टान्तपराहतोऽपि । किं च यद्यधिष्ठानज्ञानमुद्रया अध्यस्तज्ञानमिह विवक्षितं तर्हि अधिष्ठानतावच्छेदकीभूतरूपेणैवाधिष्ठानज्ञानस्याध्यस्तज्ञानहेतुताया उचितत्वात् यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवत्यदृष्टं दृष्टमश्रुतं श्रुतममतं मतमिति अधिष्ठानतानवच्छेदकोदासीनधर्मपुरस्कारेण श्रुतत्वमतत्वविज्ञातत्वादिलक्षणेनाधिष्ठानज्ञानाभिधानस्यानुचितत्वमनुपयोगित्वं च प्रसज्येत । न ह्यधिष्ठानज्ञानेऽध्यस्तधर्मज्ञानानुवृत्तिसम्भवो ज्ञातशुक्तितत्त्वस्य पूर्वाध्यस्तरजतधर्मज्ञानानुदयात् । अधिष्ठानज्ञानस्याध्यस्तस्य वस्तुनस्तद्धर्माणां च बाधकतयैवोदयेनाध्यस्तवस्तुज्ञानस्य कथमप्यसम्भावनीयत्वात् ।

एवं च यस्मिन् विज्ञाते इत्यादिग्रन्थो नाधिष्ठानज्ञानेनाध्यस्तज्ञानविषयत्वप्रतिपादनपरः किन्तु कारणज्ञानेन कार्यज्ञानप्रतिपादनपर इति कथं तस्य जगन्मिथ्यात्वसिद्ध्यौपयिकत्वम् । यस्य तु मतेऽसदेव घटादिकार्यजातं मिथ्याभूतं वा विज्ञानविश्रान्तस्वरूपमेव वा तन्मते नैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानसंरक्षणसंभव इति तन्निराकरणार्थमाह—वाचारम्भणं विकारोनामधेयं मृत्तिकेत्येव सत्यम्—घटशरावादिसंस्थानलक्षणो विकारो घटशरावादिनामधेयं च कारणमादायेव वाचाऽऽरम्भणं—वाग्व्यवहारविषयो वैलक्षण्येन व्यवहारहेतुर्भवति नैतावता वस्तुनो मृत्तिकादेः कारणस्यातद्भावसंभावनाऽपि न हि मृत्तिका घटो भवन्ती न मृत्तिकेति । तदेतदाह ब्रह्मसूत्रयुगलं भावे चोपलब्धेः । सत्वाच्चा*परस्य । एवं च कारणदशायां शिलादिषु प्रतिमादीनां सद्भावेऽपि अनभिव्यक्तेरेव शिलायां कारणावस्थायां न प्रतिमोपलम्भो न त्वसद्भावात् असतोऽनभिव्यक्तेः । सदेव हि तैलं तिलेषु सदेव च पयः सौरभेयीषु समुपलभ्यते । असतो वा मिथ्याभूतस्य वाऽर्थस्योत्पत्तौ तु न प्रमाणावतारः । अयमत्रार्थसंग्रहः विकारोनामधेयं च वाचाऽऽरम्भणं—विकारो नाम मृदादेर्घटादिलक्षणसंस्थानविशेषः । नामधेयं—मृदादिलक्षणकार्यापेक्षया विलक्षणघटादिशब्दव्यपदेशः उभयमप्येतद्वाचाऽऽरम्भ+णम् आङ्पूर्वोरभतिराद्यव्यवहारार्थो व्यवहारे आद्यत्वं च स्वसजातीयव्यवहारानुत्तरत्वं ततश्च कार्ये तात्कालिकव्यवहारः फलति । आरभ्यते इत्यारम्भणमिति कृत्यल्युट इति कर्मणि ल्युट् एवं च घटादिलक्षण-

* सत्वाच्चावरस्येति तु पाठान्तरम् ।

\+ आरम्भणश्च आरम्भणं चानयोः समाहारः आरम्भणमिति तेन विकारविशेषणत्वे आरम्भण इति योज्यं नामधेयविशेषणत्वे तु आरम्भणमिति नपुंसकेनान्वयः । यद्वा नपुंसकमनपुंसकेनेत्येकशेषः ।

संस्थानविशेषो घट इति नामधेयं च तात्कालिकवाग्व्यवहारविषयो भवति। ततश्च व्यवहारे व्यवहर्तव्यतावच्छेदकस्य कारणत्वात्कार्यावस्थायामनुवर्तमानं कारणमेव वाचा व्यवह्रियमाणमिति सर्वथा कार्यकारणयोरभेदः सिध्यति। एवमेव तु विकारनामधेययोरुभयोर्वाग्व्यवहारविषयत्वाभिधानसङ्गतिरितरथा तु विकारमात्रस्य वाग्व्यवहारविषयत्वाभिधानेन नामधेयस्यापि विकारान्तर्गततया संग्रह इति पृथक् तदुत्कीर्तनं व्यर्थमेव। उभयोपादानं तु कार्ये हानोपादाननिदानविलक्षणव्यवहारमात्रस्य कारणाश्रितत्वं दर्शयति। इममेवार्थमिहैवोपसंहारवाक्यं पुष्णाति—मृत्तिकेत्येव सत्यमिति कार्येषु आन्तरालिकपृथुबुध्नोदराद्याकारविकार—नामधेयभेदेऽपि मृत्तिकेति कारणव्यवहारो भवत्यनुस्यूतो न हि पिण्डकपाल—कापालिकाद्याकारवैचित्र्येऽपि मृत्तिकाव्यवहारहानं तदिदमुक्तं सत्यमिति कारणेन हि कार्यं व्याप्तं न तु कार्येण कारणमिति मृत्तिकेत्येव सत्यमिति श्रुतिरेकविज्ञानेन सर्वविज्ञानसिद्ध्यौपयिकं कार्यकारणयोस्तादात्म्यमुपदिशन्ती मृत्तिकात्वव्यवहारस्यानुस्यूतत्वं बोधयतीति न तस्याः कार्यासत्त्वबोधनपरत्वं वा कार्यमिथ्यात्वबोधनपरत्वं वा विज्ञानविश्रान्तस्वरूपमतात्त्विकं कार्यमित्येतदर्थपरत्वं वेति स्पष्टमुपपादितं भवति। अत एव तु मृत्तिका सत्येत्यनभिधाय मृत्तिकेत्येव सत्यमित्युक्तम्। अयमत्रार्थनिष्कर्षः लोके गवादिशब्दा अर्थपराः, इति—शब्दश्चार्थविपर्यासकृद् यथा घटमानमेत्यभिहितेऽर्थप्रतिपत्तिर्भवति घटमानयेत्युक्तमित्युक्ते तु पुनर्नार्थावगमः किन्तु घटमानयेति वाक्यं स्वानुपूर्वीं बोधयति। स्पष्टश्चायमर्थो न वेति विभाषेति पाणिनीयस्य पातञ्जले। एवं चेह मृत्तिकेत्येव सत्यमित्यस्य मृत्तिकेति व्यवह्रियमाणं कारणं सत्यमेवेत्यर्थः। एवकारोऽत्र भिन्नक्रमः सत्यमित्यनन्तरमन्वेति।

एवं च सदेव सोम्येदमग्र आसीदितीदं–शब्दनिर्देश्यस्य जगतः सृष्टेः पूर्वं सदात्मकतां प्रतिज्ञाय मध्ये सत्प्रतिष्ठत्वसदायतनत्वादिना सत्स्वरूपतां व्यवस्थाप्य कार्यकारणयोस्तादात्म्येन मृत्तिकेति व्यवह्रियमाणं कारणं सत्यमेवेत्यवधारयन्त्या श्रुत्या जगतः सांवृत्तिकसत्त्ववादिनां जगदतात्त्विकत्ववादिनां च मतमुदस्यते । एवमर्थनिरूपणे मृत्तिकेत्येवेत्यत्रत्यस्य इति–शब्दस्य न वैयर्थ्यं, नापि मृत्तिकासत्यत्वविवक्षायां मृत्तिका सत्येति वक्तव्ये सत्यमिति नापुंसकनिर्देशानुपपत्तिः । नापि वाचाऽऽरम्भणमित्यस्य वागालम्बनमात्रमित्युदक्षरार्थकल्पना । नापि यतो वागालम्बनं ततो मिथ्येत्यश्रुतार्थकल्पनम् । नापि सदं पुरा सदेवेति उपक्रमे प्रतिज्ञातसत्त्वकस्य कार्यस्याकस्मादेव विनायकं प्रकुर्वाणस्य वानररचनायितो मिथ्यात्वसमर्थनविभ्रमः । नापि कार्यकारणभावस्य वास्तविकतया परिणामादिति सूत्रसिद्धं परिणामवादमपहाय योगाचारादिमतसिद्धस्य दृष्टिसृष्टिवादादेरङ्गीकरणमहानर्थसंभवो ना*प्यनीश्वरवादादेः सर्वानर्थनिदानपक्षस्योपक्षेपसंभव इत्यग्रे वचनार्थविवेचनायां साधूपपादयिष्यामः । तत्सिद्धं कार्यकारणयोरभेदप्रतिपादनाभिनिवेशशालिनी श्रुतिर्जगन्मिथ्यात्ववादं द्विषती तमपाकरोतीति ॥

यदप्यद्वैतसिद्धिकाराः कथमसतः सज्जायेत । नासतोऽदृष्टत्वादिति श्रुति–ब्रह्मसूत्रे शून्यवादिमतनिराकरणपरे इति नैताभ्यां व्यावहारिकसत्तावादिनिर्विशेषब्रह्मपक्षक्षपणाशङ्केति सगर्वं संगिरन्ते तदेतत्तेषामभिधानं न युक्तिमत् तथा हि सर्वमिदं जन्यजातं ब्रह्मणो विवर्तो मायायाश्च परिणाम इति भवत्सिद्धान्तः तत्र यदीयविवर्त-

* यस्य मते जगदिदं परिकल्पितं तेनेश्वरोऽपि कल्पित इत्येवाङ्गीकरणीयमिति तात्पर्यम् ।

भूतमिदं सर्वं तदीयसत्त्वासत्त्वे सर्वथोदासीने इति मायासत्त्वेनैव कार्यस्यामुष्य जगतः सत्त्वं निर्वहणीयं माया च कल्पितसत्त्वेति न सती, कल्पितं तु सत्त्वं सांवृत्तिकसत्त्ववादिना माध्यमिकेनापि स्वीक्रियते इति श्वश्रूभिक्षा*प्रतिक्षेपायितं वाचनिककलहमाचमेतन्निर्विशेषब्रह्मवादिनो यदसत्कारणकत्वनिराकरणसमर्थनम् । किंच कल्पनैकशरीरयोः सत्त्वासत्त्वयोर्न विरोधसंभवोऽपि यत एककालावच्छेदेन एकदेशावृत्तित्वं विरोधः स च काल्पनिकजगद्वादिमते न सिध्यतीति वस्तुसत्त्वयोः सत्त्वासत्त्वयोर्विरोधमभिप्रयती कथमसतः सज्जायेतेति श्रुतिः परं कदर्थिता भवति काल्पनिकजगत्सत्तावादिमते । तदवश्यमुत्पद्यमानस्य उत्पादकस्य च अकाल्पनिकसत्तायोगमभिप्रेत्य श्रुतिः कथमसतः सज्जायेतेति युक्तिगर्भमवबोधयतीत्यगत्याऽङ्गीकरणीयमापद्यते इतरथा तु कल्पनानां निरङ्कुशतया यथा निर्विशेषब्रह्मवादिना सत्त्वेन कल्पितात्सत्त्वेन कल्पितस्योत्पत्तिः काल्पनिकी कल्प्यते तथा परेण असत्त्वेन कल्पितादसत्त्वेन कल्पितस्योत्पत्तिरप्ययत्नेनोपपाद्येति कः केन जिगीषितः स्यात् । यदि तु विरोधोऽपि कल्पनैकशरीर इति सत्त्वेन कल्पितादेव सत्त्वेन कल्पितस्योत्पत्तिरवकल्पते नापरथेति कथमसतः सज्जायेतेति श्रुतितात्पर्यमुपवर्ण्यते इत्यनया श्रुत्या माध्यमिकपक्ष एव प्रतिक्षिप्यते न तु जगन्मिथ्यात्ववाद—दृष्टिसृष्टिवादादिरित्युच्यते तर्हि किं कल्पनातिरिक्तमपलप्य विरोधस्यापि कल्पनैकशरीरत्वमुपवर्णयता श्रुत्यक्षरपर्यालोचनाऽपि न क्रियते यो हि वैदिकंमन्यमनास्तेन श्रुत्यक्षररक्षयैव स्वमतं परिरक्षणीयं श्रुतिस्तु भगवती असतः कथं सज्जायेतेत्यभिदधती असतः सदुत्पत्तिमसाम-

* श्वश्रूभिक्षाप्रतिक्षेपन्यायशरीरं तु निरूपितमस्माभिर्वेदार्थसंग्रहभूमिकायामिति तत्तत्र द्रष्टव्यम् ।

ञ्जस्यपुरस्कारेण प्रतिषेधतिस्म । यदि पुनः सत्त्वमसत्त्वं चेत्युभयं ज्ञानविश्रान्तशरीरं न तु वस्तुसतत्त्वं तर्हि ज्ञाने विषयेणैव विशेषो हि निराकारतया धियामिति सिद्धान्ताद् विषयकृतविशेषमपहाय विशेषान्तरासंभवात् ज्ञानैकशरीरात्सतो यथा ज्ञानैकशरीरस्य सत उत्पत्तिस्तथा विशेषानाकलनात् ज्ञानैकशरीरादसतो ज्ञानैकशरीरस्य सतोऽप्युत्पत्तिरप्रतिबद्धेति किमसामञ्जस्यं ब्रुवती कथमसतः सज्जायेतेति कथं कथंकारपुरस्सरं श्रुतिरभिदध्यात् । ज्ञानं चेत्स्वात्मोपदर्शनसमर्थं स्वात्मनि स्वयं प्रमाणीभवति तर्हि विषयसत्त्वेऽपि तदेव प्रमाणं न हि घटायोन्मीलितं चक्षुः पटं न हि पश्यतीति न्यायेन स्वात्मानं प्रमिमाणं ज्ञानं विषये न प्रमाणमिति प्रामाणिकः संभावयेदपि । विशेषश्चात्यो दृष्टिसृष्टिवादिनां वेदान्तसिद्धान्तमुक्तावलीकृतां मतनिराकरणावसरे पराक्रम्य निराकरिष्यते । तत्सिद्धं कथमसतः सज्जायेतेति श्रुतिः । नासतोऽदृष्टत्वादिति ब्रह्मसूत्रं च जगदपारमार्थिकत्ववादिमतसाधारण्येन दृष्टिसृष्टिवादादिनिराकरणपरे इति प्रव्यक्तमुपपादितं भवति ।

परमप्रकृतमनुसराम:—तस्माद्विशिष्टस्यातिरिक्तत्वेऽनतिरिक्तत्वे वा शुद्धस्य निवर्तकत्वाङ्गीकारे वा कथंचिदपि न निवृत्त्युपपत्तिरिति न किञ्चिदेतत् ।

य*दपि केचिदत्यन्तार्वाञ्चो ऽत्रैव विषये निर्विषस्यापि सर्पस्य फटाटोपो भयङ्कर इति न्यायं नाटयन्त इव महतीं पूर्वपक्षोत्तरपक्षस्वरूपां मायामयीमारभटीमारचय्य या यद्विषयकप्रमा सा स्वसमानविषयकाज्ञान—तत्प्रयुक्ताधिकरणकालपूर्वत्वानधिकरणक्षणवृत्तिरिति व्याप्तेः शुक्त्यादिप्रमास्थले दृष्टत्वादात्मप्रमाऽपि तथेति प्रमात्वस्यैवोक्तव्या-

* अद्वैतसिद्धेष्टीकाकृतो गौडब्रह्मानन्दाः ।

प्यताद्रूपनियामकत्वात्तत्त्वज्ञानस्योक्तविरोधित्वसिद्ध्या चरमवृत्तेर्जगद्बाधकत्वेऽपि स बाधो ब्रह्मात्मा वा ब्रह्मभिन्नात्मा वेत्यादिपूर्वपक्षाणां नोत्थानसम्भव इति न कश्चिद्दोष इति प्रलपन्ति तदेतदत्यन्तरिक्तं वचोमात्रं तथा हि ज्ञानाज्ञानयोर्विरोधित्वादेव शुक्तिप्रमायाः शुक्त्यज्ञानस्येव आत्मप्रमाया आत्माज्ञानविरोधित्वं निर्वाह्यं तत्रात्मज्ञानपदेन ब्रह्मस्वरूपविश्रान्तज्ञानं विवक्ष्यते? उत चरमवृत्तिरूपज्ञानम्? आहोस्वित्सामान्यतो वृत्तिरूपज्ञानं? तत्र ब्रह्मस्वरूपविश्रान्तज्ञानमज्ञानविषय इत्यज्ञानावकाशप्रदस्य तस्य न विरोधित्वसम्भावनापीति न प्रथमः पक्षः ।

सामान्यतोजातस्य वृत्तिरूपज्ञानस्य तु जगद्व्यवहारनिवर्तकतया न ब्रह्माज्ञाननिवर्तकत्वप्रत्याशाऽपीति न तृतीयपक्षः ।

द्वितीयेऽपि पक्षे चरमस्य ब्रह्मविषयकवृत्तिरूपज्ञानस्य आत्मविषयकप्रमापदेन धर्तव्यस्य स्वसमानविषयकाज्ञानतत्प्रयुक्ताधिकरणकालपूर्वत्वानधिकरणक्षणवृत्तित्वं ज्ञानाज्ञानयोर्विरोधित्वादेव वक्तव्यं तच्च न समानविषयकत्वमात्रेण इतरथा पर्वतो वह्निमानिति धियं प्रति पाषाणमयो वन्ह्यभाववानिति निश्चयस्यापि प्रतिबन्धकत्वं प्रसज्येत किन्तु विशिष्य प्रकारताविशेष्यतादिनियन्त्रितस्यैव ज्ञानस्य विरोधित्वं वाच्यं न च तच्चरमवृत्तौ ब्रह्मविषयिण्यां सम्भवेदपि तस्या अखण्डब्रह्मविषयकत्वस्य भवतैवाभ्युपेतत्वात् न चापरथा लोकदृष्टमर्यादामतिलङ्घ्य न रूपे श्रोत्रवृत्तितेति न्यायेन दार्शनिकंमन्यमनसा त्वया ज्ञानाज्ञानयोर्विरोधिता वक्तुं शक्या ।

किंच प्रमा अप्रमामुच्छिन्द्यादपि तावताऽपि प्रमया जायमानोयोऽयमप्रमोच्छेदः स किंस्वरूप इत्यश्यं भवता निर्देश्यं न च तन्निर्देष्टुं क्षमसे इत्यसकृदवबोधितोऽसि ॥

वस्तुतस्तु विरोधस्यैककालावच्छेदेन एकदेशावृत्तित्वलक्षणतया विरोधित्वेन भानस्य च ज्ञानविरोधितायां तन्त्रतया विरोधिताऽवच्छेदकरूपेण भानं भवत्यपेक्षितम् अत एव प्रतियोग्युपलम्भ इव साध्यव्यापकाभावोपलम्भे साध्यव्यापकविरुद्धोपलम्भे वा जातेऽपि विरोधित्वेनाज्ञानदशायां न तस्य स्वविपरीतधीविरोधित्वं, विरोधित्वं तु वस्तुतोऽविरोधिनोऽपि विरोधित्वेन भातस्य यथा पाषाणमयो न वह्निमानिति ज्ञानविशिष्टस्य पर्वतश्च पाषाणमय इति ज्ञानस्य पर्वतो वह्निमानिति धीविरोधित्वमेवं च विरोधितायाः सप्रकारकज्ञाननैयत्यान्निष्प्रकारकं चरमवृत्त्यात्मकं ज्ञानं कथं विरुन्ध्याद् ब्रह्माज्ञानेन ।

किं च समानविषयकत्वमात्रेण विरोधित्वे घटवद् भूतलमिति धियं प्रति घटाभाववद् भूतलमिति निश्चयस्येव घटभूतल–संयोगाभावविषयकं विशकलितमपि ज्ञानं विरोधि स्यादिति तद्व्यावृत्तरूपेण विरोधिताया वक्तव्यत्वादतादृशरूपायाश्चरमवृत्तेः कीदृशी विरोधिता। यद्यपि घटोऽवृत्तिरिति धियं प्रति घटो वृत्तिरिति निश्चयस्येव घटवानिति निर्धर्मितावच्छेदकज्ञानस्यापि विरोधिता दृष्टा तथाऽपि निष्प्रकारकज्ञानस्य विरोधिताया अदृष्टत्वान्निष्प्रकारिका चरमा वृत्तिर्जगदुच्छिन्द्यादिति चित्रं ते अलोकसामान्यस्य बुद्धिविलसितम्। यदि तु तेजसस्तिमिरेणेव ज्ञानस्याप्यज्ञानेन स्वाभाविको विरोध इति निष्प्रकारकं सदपि तदुदयदेव ज्ञानमज्ञानमपहन्यादिति न किञ्चिदेतदित्युच्यते तर्हि प्रकृते अज्ञानपदेन ज्ञानाभावो न विवक्ष्यते किन्तु ज्ञानविरोधि किंचिदनिर्वाच्यं विपरीतज्ञानमेव वाच्यमेवं च तादृशविपरीतबुद्धित्वावच्छिन्नं प्रति शास्त्रजन्यज्ञानस्य चरमवृत्त्यात्मकस्य अप्रामाण्यज्ञानानास्कन्दितत्वेनैव विरोधिता

वक्तव्या न च तत्संभवति बाध्यस्येव ज्ञानस्य बाधकत्वेनाभिमतस्यापि ज्ञानस्याविद्यात्मकदोषजन्यत्वस्यावश्यकत्वेन तस्याप्रतिबन्धकत्वात्।

न च चरमवृत्तिधर्मिकाप्रामाण्यज्ञानसामग्रीदौर्लभ्यसंभावनाऽपि ब्रह्मातिरिक्तं सर्वं मिथ्येत्यद्वैतबुद्धिद्वारभूततादृशज्ञानस्याद्वैतनिश्चयनान्तरीयकतया अप्रामाण्यज्ञानसामग्र्याः सर्वदा सौलभ्यात् । अबाध्यार्थविषयकत्वाच्चरमवृत्तेरप्रामाण्यज्ञानानास्कन्दितत्वप्रत्याशाऽपि पुनर्दुराशैव ।

ब्रह्मातिरिक्तसकलप्रपञ्चस्य दोषजन्यत्वेन ज्ञानमात्रस्याप्रामाण्यज्ञानास्कन्दिततया अबाध्यार्थविषयकत्वस्यैव दुर्ग्रहत्वात् । किंच अबाध्यार्थविषयकत्वेनाप्रामाण्यज्ञानानास्कन्दितत्वमप्रामाण्यज्ञानानास्कन्दितत्वेन चाबाध्यार्थविषयकत्वमित्यन्योन्याश्रयोऽपि । किंच स्वरूपतो विद्यमानमबाध्यार्थविषयकत्वं नोपयुज्जीतेति चरमवृत्तिरबाधितार्थविषयिणीत्याकारकज्ञानस्यैवोपयोगिता वाच्या तच्च चाबाध्यार्थविषयकत्वेनाबाध्यार्थविषयकत्वसाधने साध्याविशेषः । चरमवृत्तिधर्मिकाबाध्यार्थविषयकत्वप्रकारकप्रत्यक्षं तु न संभवति ज्ञानप्रत्यक्षस्य ज्ञानविषयीभूतार्थप्रत्यक्षपुरःसरतया चरमवृत्तेः पूर्वं तादृशप्रत्यक्षसामग्रीसंवलने अधिष्ठानसाक्षात्कारेणाज्ञाननिवृत्तौ चरमवृत्तेःस्वयमुदेतुमशक्यत्वात् । नापि प्रमाणान्तरेण तादृशज्ञानसंभव इति कथं चरमवृत्तेर्जगद्बाधकत्वाभिधानम् । किंच ज्ञानाज्ञानयोर्विरोधित्वे विरोधितावच्छेदककुक्षौ प्रमात्वस्य प्रविष्टतया किं तत्प्रमात्वं चरमवृत्ताविति विवेचनीयं न च तद्गुणजन्यत्वं बाध्यत्वेनाभिमतानामपि ज्ञानव्यक्तीनां व्यवहाराविसंवादेन गुणजन्यात्वस्यावश्यकत्वेन प्रतिबन्धकतावच्छेदके विशेषानिरूपणात्। नापि दोषाजन्यत्वं पूर्वोक्तरीत्या चरमवृत्तेरपि दोषजन्यत्वात् ।

नाप्यनागन्तुकत्वागन्तुकत्वाभ्यामपि दोषे विशेषो निर्धारयितुं पार्यते विशेषव्यवस्थापकज्ञानस्य स्वयमप्रामाणिकत्वेन व्यवस्थापकत्वानुपपत्तेः । अनागन्तुकाविद्यात्मकदोषस्यापि देहात्मबुद्धिजनकत्वेन ज्ञानाप्रामाण्यव्यवस्थापकताया आवश्यकत्वाच्च । नाप्यबाध्यार्थविषयकत्वं प्रमात्वं तथा सति लौकिकव्यवहारमात्रोच्छेदप्रसङ्गात् । सर्वव्यवहाराणां लौकिकवैदिकानां भवन्मते दोषजन्यतया ज्ञानमात्रेऽनाश्वासप्रसङ्गेन तथा शङ्कितुमप्यशक्यत्वात् । अबाध्यार्थविषयकतायाः पूर्वोपदर्शितरीत्या दुर्वचत्वाच्च । नाप्यात्मविषयकत्वं तत् त्वन्मते ज्ञानमात्रस्यात्मविषयकत्वेन तस्याव्यावर्तकत्वात् । नापि शुद्धात्मविषयकत्वं प्रमात्वं वक्ष्यमाणरीत्या ज्ञानमात्रस्यात्मस्वात्मावगाहितया शुद्धात्मविषयकतायाः कथमप्यसंभवात् । न च त्रिकालाबाध्यार्थविषयकत्वरूपमपि तत् तस्यासर्वज्ञदुर्विज्ञानत्वात् तस्मान्मनोरथमात्रमिदं ज्ञानदुर्बलानां चरमवृत्तेर्जगदुच्छेदकत्वाभिधानमिति किमु भूरि भाषितेन ।

यश्च घटादिविषयकोदासीनवृत्त्यपेक्षया ब्रह्मविषयिण्याश्चरमवृत्तेर्ब्रह्मविषयकत्वाविशेषेऽपि सावच्छिन्नचिद्विषयकत्व–निरवच्छिन्नचिद्विषयकत्वलक्षण एव विशेषस्तत एव च विशेषाद् घटादिविषयिण्यपि वृत्तिर्घटाद्यवच्छिन्नचिद्विषयिणी भवन्त्यपि घटादिकं नोत्सादयति तस्या अधिष्ठानतत्त्वसाक्षात्काररूपत्वाभावात् । चरमा तु वृत्तिरधिष्ठानसाक्षात्काररूपत्वाज्जगदुन्मूलयन्त्येवोदयमासेदुषीति तस्याः सुघटमेव जगदुन्मूलनक्षमत्वमिति पक्षः सोऽसौ शाल्मलि*-फलकल्प एव वक्ष्यमाणकल्पेषु कस्मिन्नपि कल्पे भवत आत्मक्षाण-

* सेमर इति लोके प्रसिद्धं फलं तस्य रूपमतीव शोभनमिति रूपलुब्धाः-पक्षिणो भक्षयितुमिच्छन्तः क्षतशतचञ्चूव्यापारा विहततुण्डास्तत्र फले केवलं तूलमुपलभ्य वन्ध्ययत्ना भवन्ति तद्वदित्यर्थः ।

सम्भवात् तथा हि चरमा वृत्तिर्जगदुत्पाद्यात्मानं लेभे उत जगदुत्पादयन्ती आत्मानमासेदुषी । आहोस्विदुत्पद्य जगद्दहनहेतुः । किं वा जगदुत्पादनस्वभावैव सेति वक्तव्यं, तत्र न प्रथमः चरमवृत्त्युत्पत्तेः पूर्वं जगदुत्पादककारणासम्भवात् । तथाऽभ्युपगमे वा जगदन्तर्गतायाश्चरमवृत्तेरेवानुत्पादप्रसङ्गाद् भवताऽपि तथाऽनङ्गीकाराच्च । नापि द्वितीयः कल्पः चरमज्ञानव्यक्तेर्जगदुत्पादनकारणत्वं ज्ञानाज्ञानयोर्विरोधित्वादेव वक्तव्यं विरोधित्वं च समानविषयकत्वेन । न च तत्सम्भवि अज्ञानस्य शुद्धविषयकत्वाद् ज्ञानस्य च स्वतः* प्रामाण्यवादिनां मीमांसकानां वेदान्तिकानां च स्वावगाहिताया अप्यावश्यकत्वेन अज्ञानकार्यभूतस्वात्मावगाहित्वेन अज्ञानतत्कार्यविषयकज्ञानस्यैव च विरोधित्वेन तस्य तथा†भावविरहात् । न ह्युत्पद्यमानं ज्ञानं विषयांशे परोक्षं भवदपि स्वात्मनि परोक्षं तथा सति सर्वव्यवहारोपप्लवप्रसङ्गात् । यथोक्तं धर्मकीर्तिनाऽपि अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यतीति, युक्तं चैतदन्यथा ज्ञानस्य स्वात्मनाऽनवभातत्वे जिज्ञासोः पुरुषस्य जानामि न वेति संशयो न जानामीति विपर्ययो व्यतिरेकप्रमा वोत्पद्येत न च तथोत्पद्यते । तस्माज्जिज्ञासितस्याततत्त्वज्ञानव्यतिरेकप्रमाणामभावकूटेन व्याप्येन व्यापकसिद्धिरिति मुद्रया स्वव्यापकं जिज्ञासितस्य प्रमितत्वं सिद्ध्यति । ज्ञानस्याप्रमितत्वे तु जिज्ञासमानस्य ज्ञानविषय संशय–विपर्यय–व्यतिरेकप्रमाः कथमिव स्वजनकसामग्रीसंवलने नोत्पद्येरन् । तदवश्यमङ्गीकरणीयं ज्ञानस्य स्वप्र-

---

* स्वग्राहकसामग्रीग्राह्यत्वलक्षणमेव स्वतस्त्वमिति भावः ।

† अयमत्रार्थसंग्रहः–चरमज्ञानव्यक्तिर्भवत्यज्ञानकार्यस्वरूपा अज्ञानतत्कार्यविषयकज्ञानमेव च अज्ञानविरोधि न च चरमव्यक्तिस्तथेति सा कथं जगन्निराकरणकारणं भवेदिति ।

काशत्वं तच्च स्वात्मनाऽनवभातत्वे कथं घटेत । न हि स्वात्मनाऽनवभातमपि अथ च स्वप्रकाशमिति सम्भवति । एवं च चरमा वृत्तिर्ब्रह्म विषयीकुर्वाणा स्वात्मानमप्यवभासयतीति तस्याः स्वात्मकाज्ञानकार्यविषयकत्वेन अज्ञानतत्कार्याविषयकत्वविरहे कथं जगद्बाधकता घटेतेति सुज्ञानं विज्ञानाम् ।

अज्ञानतत्कार्यविषयकज्ञानस्यापि विरोधित्वाङ्गीकारे तु अहमज्ञः । अयं घट इत्यादिज्ञानानामपि जगद्बाधकताप्रसङ्ग इति किमु भूरि भणितेन । "एतेन शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः । स्वस्वेतरोपाधिनिवृत्तिहेतुरुच्यते । स्वस्याप्युपाधित्वाविशेषात् । एवं च नानुपहितस्य विषयता । वृत्त्युपरागोऽत्र सत्त्येोपयुज्यते न तु भास्यतया विषयकोटिप्रवेशेने"ति भामतीकल्पतरुकृदुक्तमपि निरस्तं भवति, ज्ञानस्य स्वप्रकाशत्वेन विषयस्येव स्वस्यापि प्रकाशनेन चरमवृत्त्या ब्रह्मण इव वृत्तेरपि प्रकाशनेन अज्ञानकार्यवृत्तिविषयकतया ब्रह्माज्ञाननिरासकत्वासम्भवात् । यदि तु अज्ञानोपहितस्य साक्षित्वेऽपि यथा नाज्ञानं साक्षिकोटौ प्रविशति जडत्वात् किन्तु साक्षात्करणीयकोटावेव । एवं वृत्त्युपहितस्य विषयत्वेऽपि वृत्तिर्न विषयकोटौ प्रविशति स्वस्याः स्वविषयत्वानुपपत्तेः । किन्तु वृत्तिः स्वयमविषयोऽपि चैतन्यस्य विषयतां सम्पादयतीति न कश्चिद्दोष इत्युच्यते तर्हि ज्ञानं स्वात्मानं नावभासयतीति तस्य स्वप्रकाशत्वव्याघातः न हि प्रकाश्यत्वादितरा काचन घटविषयकज्ञानस्य घटेऽपि विषयता । एवं च ज्ञानस्य प्रकाशलक्षणैव चेद्विषयता तर्हि पूर्वोपदर्शितरीत्या प्रकाशलक्षणविषयतावत्ता विषयेष्विव ज्ञानेऽप्यवश्यनीयेति अज्ञानस्योपाध्यविषयकत्वेन शुद्धब्रह्मविषयकतया ज्ञानस्य च स्वात्मकोपाधिविषयकत्वे सति ब्रह्मविषयकत्वेनासमानविषय-

कतया न क्लृप्तप्रतिवध्यप्रतिबन्धकभावसम्भवः । तस्याज्ज्ञानाज्ञानयोरुपाध्यविषयकत्वे सत्युपहितविषयकत्वात्समानविषयकत्वं तेन च ब्रह्मज्ञानस्य ब्रह्माज्ञाननाशकत्वमिति दुष्प्रत्याशामाचमनैपुण्यनिबन्धनम् । यदि तु घटवद् भूतलमिति धियं प्रति घटाभाववद् भूतलं कुड्यं चेत्यधिकाव*गाहिज्ञानं यथा निवर्तकं तथा ब्रह्माज्ञानस्य स्वात्मावगाहित्वेनाधिकावगाह्यपि ब्रह्मज्ञानं निवर्तकमिति का क्षतिरित्युच्यते तदा सन् घट इत्यपि ज्ञानं जगन्निवर्तयेत्तस्यापि सद्विषयकत्वेन ब्रह्मविषयकत्वात् । अत एव तु अज्ञान–तत्कार्याविषयकमेव ज्ञानमज्ञाननिवर्तकमिति निर्विशेषाद्वैतसिद्धान्तः । यदि पुनः शब्दादप्यपरोक्षत्वादिना वाक्यसमुत्थापरोक्षधीरज्ञाननिवर्तिका शाब्दबोधे च शब्दानुपस्थिताभाननियमेन वृत्त्युपस्थापकपदविरहाद्वृत्तिर्नावभासितुमर्हतीति ब्रूषे तर्ह्यनभिज्ञो भवान् मीमांसकभणितीनां स्वसिद्धान्तस्य चेत्येव वक्तव्यमस्माभिर्यतः प्रायो व्यवहारे मीमांसकनयानुवर्तिनो भवन्तस्ते च ज्ञानानां स्वतःप्रामाण्यमामनन्ति ततश्च ज्ञानज्ञानेन ज्ञानप्रामाण्यावगमनियमात्प्रामाण्यस्य च ज्ञानज्ञाननैयत्यात् ज्ञानं विषयस्येव स्वात्मनोऽपि प्रकाशकमिति पदानुपस्थितस्यापि स्वस्य ज्ञानसामान्यसामग्र्येव भासितत्वान्न पदादुपस्थितिरपेक्ष्यते तत्साधु समर्थितं ज्ञानाज्ञानयोरसमानविषयकत्वान्न निवर्त्यनिवर्तकभाव इति ।

कथंचिदपि समानविषयकत्वनिर्वाहे वा श्रुतिसमुत्थवाक्यार्थबुद्धेरविद्यात्मकदोषप्रभवत्वादप्रामाण्यज्ञानास्कन्दितत्वेन नाज्ञाननिवर्तकत्वं, तत एव च न जगन्निवर्तकत्वमिति व्यक्तमेव ।

* यद्यप्यधिकावगाहित्वेन न प्रतिबन्धकता तथाप्यधिकं तु न तद्धानिरिति न्यायेनाधिकावगाहिनोऽपि तदवगाहित्वात्प्रतिबन्धकतेति भावः ।

उत्पद्य चरमा वृत्तिर्जगद्दहनहेतुरिति तृतीयकल्पोऽपि न युज्यते पूर्वोक्तदोषानुषङ्गात् । वक्ष्यमाणदूषणगणग्रासाच्च तथा हि चरमा वृत्तिर्न निर्विशेषज्ञानस्वरूपा ब्रह्मस्वरूपविश्रान्तस्य तथाविधज्ञानस्याज्ञानावकाशप्रदस्य तेन विरोधासंभवादित्यसकृदुपपादितत्वात् । ज्ञानान्तरस्य निवर्तकत्वे तज्ज्ञानमपि ज्ञातृज्ञेयाद्यनुबन्धितया चिद्रूपकमिति तदपि निवर्त्यान्तर्गतमिति तन्निवर्तकं वाच्यं तन्निवर्तकमपि च ज्ञानं चिद्रूपकमिति तस्यापि निवर्तकान्तरमित्यनवस्था । निवर्तकत्वेनाभिमतज्ञानस्य चिद्रूपकत्वविरहे तु निर्विशेषज्ञानस्वरूपब्रह्मात्मन्येव पर्यवसानमित्यज्ञानाश्रयत्वेनाभिमतस्य ज्ञानस्याज्ञाननाशकत्वमापतितं तच्चासकृदेवादूदुषाम । ब्रह्मातिरिक्तस्य कस्यचिदपि निर्विशेषस्वरूपत्वानङ्गीकारात् । अङ्गीकारे वा निर्विशेषब्रह्मद्वयमुक्तं स्यादिति सर्वथा सिद्धान्तच्युतिरिति व्यक्तमेव ।

जगदुत्पादनस्वभावैव सा चरमा वृत्तिरिति चरमपक्षोऽपि पुनरयुक्तः । तथा हि जगदुत्पादनेन तस्यास्तत्स्वभावत्वं तत्स्वभावत्वेन च जगदुत्पादकारणत्वमिति परस्पराश्रयात् । एवमपि च चरमवृत्तेः स्वनाशे किमपि कारणं नोक्तं भवतीति पक्षान्तरसमानमेव दूषणमिति कृतं पल्लवैः ।

यच्च द्वितीयकारणनिरपेक्षप्रतियोगिनः प्रतियोगित्वोपादाननाशत्वरूपद्वयावच्छिन्नस्य स्वस्यैव स्वनाशकत्वाभिधानं तत् पुनरत्यन्तसाहसिकतामात्रं तथा हि यादृशरूपद्वयावच्छिन्नस्य तस्य प्रतियोगिनोनाशकत्वं ब्रूषे तादृशरूपद्वये द्वित्वजनिकाऽपेक्षा बुद्धिर्द्वये द्वयत्वनियामिका बुद्धिश्च कथं नश्यतु । न हीतरापेक्षाबुद्धीनामिवास्याश्चतुर्थक्षणनाश्यत्वं युक्तं वक्तुं तदानीं क्षणत्वनियामकोपाधीनामभावात् भावे वा तन्नाशकस्यैव पुनर्दौर्लभ्यापातात् । इदमत्र

विवेचनीयं जगद्बाधजनिकायाश्चरमब्रह्मज्ञानव्यक्तेः स्वयमपि कल्पितत्वात्तत्कल्पकदोषानुवृत्तिस्तत्काले आवश्यकी सोऽपि च दोषः कल्पितोऽथ तत्कल्पककल्पकोऽपीत्यनवस्थितानन्तकल्पनाव्यासक्तचेतसो मुच्यमानस्य जन्तोर्न ब्रह्मज्ञानोदयसंभवो ज्ञानानामयौगपद्यात् । यौगपद्याङ्गीकारे च कार्यकारणभाव एवासंभवी न हि चरमब्रह्मज्ञानव्यक्तिस्तत्कल्पिका च व्यतिरेककालीनाऽथ कारणरूपाऽपीत्यनुन्मत्तः संभावयेदपि । एवं चरमज्ञानव्यक्तेर्दोषजन्यतयाऽप्रामाण्यज्ञानास्कन्दितत्वेनाऽज्ञाननिवर्तकत्वानुपपत्तिरपि । न हि दोषजन्यमप्रामाण्यज्ञानास्कन्दितमपि ज्ञानं स्वविपरीतज्ञानप्रतिबन्धकमिति युज्यते । यच्च दोषाजन्यं ब्रह्मस्वरूपविश्रान्तं ज्ञानं न तदज्ञानप्रशमकं तस्याज्ञानभासकत्वेनाज्ञानावकाशप्रदत्वात् । यथोक्तम् आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥ इति । यदि त्वागन्तुकदोषजन्यत्वमप्रामाण्यप्रयोजकं ब्रह्मज्ञानव्यक्तिस्तु नागन्तुकदोषजन्या तस्या अविद्यात्मकस्यातु दोषजन्यत्वादित्युच्यते तर्हि देहात्मबुद्धिरपि प्रामाणिकी स्यात्तस्या अप्यनागन्तुकाविद्यात्मकदोषप्रभवत्वात् । किंचेह उपादाननाशपदेन चरमवृत्तिजनकाज्ञानातिरिक्तोपादाननाश एव वक्तव्योऽन्यथा तु चरमवृत्तिजनकाज्ञाननाशे चरमवृत्तिरेव कथमुदियात् । ततश्च भावानामुद्यतां सान्वयस्वभावत्वाच्चरमवृत्तिकाले स्वजनकाविद्याया ध्रियमाणत्वात्तन्नाशः केन कथं किंस्वरूपश्चेति वक्तव्यं न च तद्वक्तुं पारयसीति व्यक्तमेव तत्तत्रास्माभिरुपपादितम् । किंच पदार्थानां क्षणिकत्वनिराकरणार्थं स्वस्य स्वनाशकत्वप्रसङ्गवारणार्थं च प्रतियोगिनः प्रतियोगित्वोपादाननाशत्वरूपद्वयावच्छिन्नस्य नाशकताऽभ्युपगता भवता एवं चोपादाननाशो ब्रह्मात्मा

वा ब्रह्मभिन्नात्मा वेति वक्तव्यं तत्रोपादाननाशस्य ब्रह्मात्मकत्वे उक्ता एव दोषाः । ब्रह्मभिन्नात्मत्वेऽपि च ब्रह्मभिन्नात्मनस्तस्य प्रतियोगित्वस्योपादाननाशस्य च नाशः कथं केन कीदृशश्चेति पूर्ववदेव वक्तव्यं । न च तद्वक्तुं पारयसीति विवेचितमेव तत्रतत्र । योऽपि वस्तुतस्तु अविद्यानिवृत्तेर्वृत्तिरूपतया न निवर्तकखण्डनावकाशो वृत्तिनिवृत्तेरात्मरूपतया न तज्जनकखण्डनावकाशोऽपीति सर्वमवदातमित्युपसंहारोऽद्वैतसिद्धिकृतां सोऽसौ पूर्वोक्तदोषानतिलङ्घीति तत एवास्य निराकृतिः । तथा हि अविद्यानिवृत्तेर्वृत्तिरूपतया वृत्तिजनकसामग्री आत्ममनस्संयोगेन्द्रियमनःसंयोगविषयेन्द्रियसंयोगादिरूपा वृत्तिरूपाया अविद्यानिवृत्तेर्जनिकेति तस्याः सौलभ्येन नाविद्यानिवर्तकखण्डनं लब्धावसरं वृत्तिनिवृत्तिश्चात्मरूपेत्यात्मनः सिद्धरूपतया वृत्तिनिवृत्तिजनकखण्डनमप्ययुक्तमिति तात्पर्यपरिशुद्धिः कर्तव्या तत्रेदमवधेयम् । भवत्वविद्यानिवृत्तिर्वृत्तिरूपा भवतु च सा पुनरात्मरूपा वृत्तिनिवृत्तिः परं तु आत्मरूपायां चरमवृत्तिनिवृत्तौ सर्वदैव विद्यमानायां चरमवृत्तिः कथमिव लब्धपदेति सावधानेन भवता समाधेयम् । न हि प्रतियोगिनाशेऽनुवर्तमाने प्रतियोगी स्पन्दितुमप्यर्हति इतरथा तु नाश एव स कीदृशो यतस्मिन्ननुवर्तमानेऽपि प्रतियोगी यथापूर्वमवस्थितः ।

किंचाविद्यानिवृत्तिश्चेद् वृत्तिरूपा तर्हि वृत्तित्वादेव सा वृत्तिसामग्रीजन्यैवेत्यवश्यमङ्गीकरणीयं वृत्तिसामग्री च पूर्वोक्तैव । एवं च यदेव नाशकं तदपि नाश्यमिति तत्केनापसार्यताम् । अपसरणमेव वा तस्य तत् कीदृशमित्यादिपूर्वोदितचोद्यानतिवृत्तिरेषोऽपि कल्प इति स्वयमूहनीयाः सर्वेऽपि दोषा इति कृतधियां सुधियां परामर्शोऽयमविचाल्यः सुरगुरोरपीति शम् ।

तदेवं जगन्निवर्तकानुपपत्तौ निवृत्त्यनुपपत्तौ च सुव्यवस्थितायां जगदिदमनन्तपरिणामभागपि प्रतिक्षणमुपचयापचयलक्षणविलक्षणस्वभावमपि दैनन्दिनप्रलय—प्राकृतप्रलय—महाप्रलयेषु ध्वंसमानमपि स्वकारणमप्येति न त्वेकान्तत उत्सीदति अयथापूर्वमुत्पद्यते वा। मिथ्यावाद्यभिमतरीत्या बाध्यते वा कल्पनैकशरीरमसद्रूपमेव वा तस्माज्जगन्मिथ्यात्वानुमापकतया तैस्तैरल्पधिषणैर्वादिभिरभ्यूहितानि हेत्वाभासमात्रोदाहरणस्वरूपाणि अल्पज्ञानां धीधर्षणानि न्यायप्रयोगस्वरूपाणि कुशलानां विनोदाय तदितरेषां तु बुद्धिसंग्रहाय सुप्रसिद्धमायावादिग्रन्थेभ्य उद्धृत्य निराक्रियन्ते ।

तत्र चित्सुखा*चार्यास्तु अयं पट एतत्तन्तुनि†ष्ठात्यन्ताभावप्रतियोगी अंशित्वादितरांशिवत् । अत्र तन्तुपदमुपादानपरं तेनोपादेयस्योपादाननिष्ठात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वसिद्धिः । न च कार्यकारणयोरभेदेनाश्रयाश्रितत्वभावासंभवात्सिद्धसाधनम् । कार्यस्यानाश्रितत्वेनान्याश्रितत्वेन चोपपत्तावर्थान्तरं चाशङ्कनीयम् । कार्यकारणयोः सर्वथाऽभेदाङ्गीकारे कार्यकारणभावासंभवात्कथमपि भेदोऽभ्युपेय इति सिद्धसाधनानवसरात् । नाप्यर्थान्तरं कार्यस्य पटादेर्गगनादेरिवावृत्तित्वविरहादन्याश्रितत्वस्यापि च प्रत्यक्षपराह-

---

* प्रधानमल्लनिबर्हणन्यायेनाद्वैतसंप्रदाये तर्ककुशलतया प्रसिद्धाः श्रीमच्चित्सुखाचार्या इति ते एव प्रथमतो बुद्धिविषयाः ।

† पटमात्रं पक्षीकृत्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वसाधनेऽर्थान्तरता पटान्तरस्यैतत्तन्तुनिष्ठत्वविरहादिति पक्षतावच्छेदककुक्षौ अयमित्येतत्पटस्य पक्षीकारः । एतत्तन्तुनिष्ठान्योन्याभावध्वंसादिप्रतियोगितायाः एतत्पटे परेणाऽप्यङ्गीकृतत्वात्सिद्धसाधनवारणायात्यन्ताभावपदम् । तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वोक्तावपि तन्त्वन्तरमादायार्थान्तरमित्येतत्तन्तुनिष्ठत्वेनात्यन्ताभावो विशेषितः । पटान्तरे एतत्पटानारम्भकतन्तुभिरारब्धे एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वरूपसाध्यप्रसिद्ध्या नाप्रसिद्धविशेषणत्वमपीति हृदयम् ।

त्त्वात्। एतत्तन्त्वाश्रितः पट इति वा पक्षो विशेषणीय इति नार्थान्तरम्।

न चैतत्संयोगिनि पटान्तरेऽशित्वरूपहेतोः सत्त्वात्तत्र चैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वविरहाद् व्यभिचार इति वाच्यं तत्समवेतस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वमभ्युपयतस्तत्संयोगिनस्तन्निष्ठात्यन्ताभावप्रतियोगित्वस्यावश्यमङ्गीकरणीयतया पक्षसमत्वात्पक्षे पक्षसमे च व्यभिचारस्य कथकसंप्रदायानुरोधेनानुद्भाव्यत्वात्। साध्याभावनिश्चयवति हेतुसंदेहे हेतोर्निश्चये वा तस्य दूषकत्वं न तु साध्यसंदेहवति पक्षे पक्षतानवच्छेदकधर्मवति संदिग्धसाध्यके धर्म्यन्तरे वा तस्यानुमितौ प्राचीनमतसिद्धपक्षतामुद्रयाऽनुकूल्यादिति तत्त्वम्। नाप्यव्याप्यवृत्तित्वेनार्थान्तरशङ्का पट—तदभावयोरेकाधिकरणवृत्तित्वाभ्युपगमे विरोधकथाया अपि जगत्युच्छेदप्रसङ्गात्। वस्तुतस्तु संयोग—तदभावावपि नैकाधिकरणवृत्तौ अवच्छेदकभेदेनैव तयोः समावेशाङ्गीकारात्।

संयोग—तदभावयोरैकाधिकरण्याङ्गीकारे तु एतत्तन्तुत्वावच्छिन्नवृत्तिकत्वमत्यन्ताभावविशेषणं देयम्। एतत्कालीनत्वविशेषणदानेन च पटोत्पत्तिपूर्वकालीनं तन्तुवृत्तिकपटा*भावमादाय नार्थान्तरम्। एवं च यत्कालावच्छेदेन यद्देशावच्छेदेन येन रूपेण येन सम्बन्धेन च यद्वस्तु वादिना सदित्युच्यते तत्कालावच्छेदेन तद्देशावच्छेदेन तेन रूपेण तेन संबन्धेन च तस्य वस्तुनोऽभावो मिथ्यावादिभिरभ्युपेयते इति तु पर्यवसन्नतत्त्वम्। न चैतादृशमिथ्यात्वसाधने इह तन्तुषु पट इति प्रत्यक्षबाधस्तस्य चन्द्रप्रादेशिकत्वा-

* ध्वंसप्रागभावाधिकरणयोऽप्यत्यन्ताभावसत्त्वमतमभ्युपेत्येदमिति भावः।

दिप्रत्यक्षवदतात्त्विकतया विपरीतज्ञानजन्यत्वेन चाप्रामाण्यज्ञानास्कन्दिततयाऽबाधकत्वात् ।

व्यवहारस्य चातात्त्विकत्वेऽपि मरुमरीचिकागन्धर्वनगरस्वाप्नप्रियाऽऽश्लेषतच्चुम्बनकटाक्षभ्रूक्षेपादिवदेवोपपत्तेः ।

न हि सदित्येवोपभोगयोग्यमसतोऽपि तद्वदेव भोगहेतुत्वात् । म्रियन्ते हि मिथ्याभोगिदष्टाः । भोगिदष्टा अपि चाज्ञाततत्त्वाः कदाचन नोपहन्यन्ते विषेणेत्यभिज्ञानामन्वयव्यतिरेकौ स्तः । न चान्यासमवेतस्य वृत्तिमतोंऽशित्वमेततन्तुसमवेतत्वं विनाऽनुपपन्नमिति हेतोर्विरुद्धतयांऽशित्वस्यैततन्तुसमवेतत्वव्याप्यतयांऽशित्वेन कथमेततन्तुवृत्तिकात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वसिद्धिरिति वाच्यम् । एततन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽप्येततन्तुसमवेतत्वस्य सत्त्वेनांशित्वस्य साध्येनाविरोधात् । न ह्येततन्तुवृत्तिकात्यन्ताभावाप्रतियोगित्वमेततन्तुसमवेतत्वप्रयोजकं तथा सति केवलान्वयिनो धर्ममात्रस्य ज्ञेयत्ववाच्यत्वादेरेततन्तुसमवेतत्वप्रसङ्गात् । किं त्वेतन्निष्ठप्रागभावप्रतियोगित्वं वा सामग्रीसमवधानकालीनतद्वस्तुस्वभावविशेषो वा पटस्य तन्तुसमवेतत्वे प्रयोजक इति पटस्यैततन्तुवृत्तिकात्यन्ताभावप्रतियोगित्वेऽपि तन्तुसमवेतत्वं न विरुद्धमिति न हेतौ विरुद्धत्वशङ्काऽपि ।

अथायं पट एततन्तुवृत्तिकात्यन्ताभावप्रतियोगित्वाभाववान् एततन्त्वारब्धत्वात् । व्यतिरेके पटान्तरवदिति सत्प्रतिपक्षः । एततन्तुवर्तिनोऽपि पटस्यैततन्तुवृत्तिकात्यन्ताभावप्रतियोगित्वमङ्गीकुर्वतो वस्तुजाते एततन्तुवृत्तिकाभावप्रतियोगित्वमस्तीति तस्य केवलान्वयित्वेन तदभावाप्रसिद्ध्या कथमेततन्तुवृत्तिकाभावप्रतियोगित्वाभावसाधनमिति तु नाशङ्कनीयम् । एततन्तुनिष्ठात्यन्ता-

भावप्रतियोगित्वं किंचिन्निष्ठात्यन्ताभावप्रतियोगि संसर्गाभावप्रतियोगित्वव्याप्यत्वादिति सामान्यतोदृष्टानुमानेन एतन्निष्ठात्यन्ताभावप्रतियोगित्वाभावसिद्धौ अप्रसिद्धविशेषणत्वासिद्धेः ।

अत्राभावप्रतियोगित्वव्याप्यत्वादित्युक्तौ केवलान्वयिनि वाच्यत्वादौ भेदप्रतियोगित्वेन अभावप्रतियोगित्वाभाववदवृत्तित्वेन हेतुसत्त्वेऽपि अत्यन्ताभावप्रतियोगित्वरूपसाध्यासत्त्वाद् व्यभिचार इति तद्वारणाय अभावप्रतियोगित्वव्याप्यत्वमपहाय संसर्गाभावप्रतियोगित्वव्याप्यत्वानुधावनं, तत्र यदि अत्यन्ताभावप्रतियोगित्वव्याप्यत्वमात्रमुच्येत तदा अत्यन्ताभावप्रतियोगित्वव्याप्यत्वेन किंचिन्निष्ठात्यन्ताभावप्रतियोगित्वप्रसाधने सिद्धसाधनमिति संसर्गाभावपर्यन्तानुधावनम् ।

घटादिवृत्तेराकाशात्यन्ताभावस्य संसर्गाभावप्रतियोगित्वव्याप्यत्वग्रहादाकाशात्यन्ताभावस्य च केवलान्वयित्वेन किंचिन्निष्ठा*त्यन्ताभावप्रतियोगित्वाभावाद् व्यभिचारस्तु न शङ्क्यः संसर्गाभावप्रतियोगित्वानधिकरणे केवलान्वयिनि ज्ञेयत्वादौ आकाशात्यन्ताभावसत्त्वेन व्यभिचाराभावात् ।

एवं च पूर्वोक्तं मिथ्यात्वसाधकस्थापनानुमानम् अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभाववान् एतत्तन्त्वारब्धत्वादित्यनेन सत्प्रतिपक्षितमिति चेन्न यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्तन्त्वारब्धत्वाभाव इति व्यतिरेकव्याप्तावेतन्निष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वेन प्रतिरोधस्य हीनबलत्वात् । एतत्तन्त्वारब्धत्वाभावव्यापकस्यैतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्य पक्षावृत्तेः

* आकाशाभावाभावस्याकाशस्वरूपतया तस्य चावृत्तित्वेन किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वाभाव इति तात्पर्यम् ।

पक्षवृत्तितया संदिह्यमानैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाव्यापकत्वात् । एवं च अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वादिति स्थापनायामेतत्तन्त्वनारब्धत्वमपि नोपाधिः । उपाधिव्यतिरेकेण साध्यव्यतिरेकसाधने एतन्निष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वान्न ह्युपाधिर्हेत्वाभासानामिव स्वयं दूषकः किन्तु दोषोन्नायकतया दोषोन्नयने च सोपाधिकत्वान्न स दोषः । एवं चेह स्थापनानुमानस्य निर्दोषतया सर्वेष्टसिद्धिः । पूर्वोक्तरीत्या प्रतिरोधोऽपि च हीनबल इति तेन सत्प्रतिपक्षत्वमप्यनाशङ्कनीयमिति वादिनोऽभिमन्यन्ते ॥

सहस्रतन्तुकपटस्य तन्तुसहस्रारब्धस्यापि संयोगाव्याप्यवृत्तितावादमते पटघटकादिमदशतन्त्ववच्छेदेन विद्यमानात्यन्ताभावप्रतियोगित्वेऽपि एतन्तन्त्वारब्धत्वसत्त्वादेतत्तन्त्वारब्धत्वमेतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावव्यभिचारीत्यपि हेतुरकिंचित्करः । अत एव यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्तन्त्वनारब्धत्वमिति न साध्यव्यापकताग्रहोऽपि तत्रैव व्यभिचारादिति सर्वमनवद्यमिति स्वमतावेशवैवश्यमात्रादभिमन्यन्ते ।

तदेतदनधिगततर्कतत्त्वधीधर्षणं कुतर्काडम्बरकौतुकमात्रं तथा हि अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वादिति स्थापनानुमाने सिषाधयिषितं यदेतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तद्यदि सामान्यतो विवक्ष्यते तदा सिद्धसाधनं जगत्सत्यत्ववादिनाऽपि पटे पटघटकैतत्तन्तुनिष्ठोदासीनसंयोगस्वरूपादिसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगित्वाभ्युपगमात् । यदि तु एतत्तन्तुनिष्ठसमवायसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगित्वं साध्यते

तदा विरुद्धोहेतुर्न हि एतत्तन्त्वन्यासमवेतस्यांशित्वमेतत्तन्तुसमवेतत्वं विना संभवति । नचैतत्तन्तुषु पटः समवेयादपि भवेदपि चैतत्तन्तुनिष्ठसम*वायसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगीत्यविकलकरणः संभावयेदपि । यद्यपि सामान्यत एतन्निष्ठात्यन्ताभावाप्रतियोगित्वमेतत्तन्तुसमवेतत्वप्रयोजकं माभूत्तस्य† वाच्यत्वादिरूपकेवलान्वयिधर्मसाधारण्येन वाच्यत्वादीनामपि एतत्तन्तुसमवेतत्वापत्तेः

किं त्वेतन्निष्ठसमवायसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावाप्रतियोगित्वमेतत्तन्तुसमवेतत्वप्रयोजकं, न च समवायेनैतत्तन्तुष्ववृत्तेरेतत्तन्तुसमवेतत्वसंभवोऽन्यथा लोकव्यवहारोपप्लवप्रसङ्गात् । न हि पटार्थी पटमेतत्तन्तुवृत्तिकात्यन्ताभावप्रतियोगिनं जानीयादपि व्याप्रियेतापि च तेष्वेव तन्तुष्विति वक्तुं शक्यते स्वक्रियाव्याहतिप्रसङ्गात् ।

यथाहुः तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातो न भवतीति । यदि तु पटस्यैतत्तन्तुसमवेतत्वेन एतत्तन्तुवृत्तिकात्यन्ताभावाप्रतियोगित्वमेतत्तन्तुवृत्तिकात्यन्ताभावाप्रतियोगित्वेन चैतत्तन्तुसमवेतत्वमित्यन्योन्याश्रयापत्तिरिति नैतत्तन्तुसमवेतत्वे एतत्तन्तुवृत्तिकसमवायसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावाप्रतियोगित्वं हेतुः किं त्वेतन्निष्ठप्रागभावप्रतियोगित्वादिकं किंचिदन्यदेवेत्युच्यते तदा एतन्निष्ठप्रागभावप्रतियोगित्वमेतत्पटे एव नान्यत्रेति व्यवस्थायां किं कारणमित्येष पर्यनुयोगः सावसरो भवति । एवं चैतत्तन्तुसमवेतत्वे एतन्निष्ठप्रागभावप्रतियोगित्वं हेतुः ।

* अत्र समवायपदं कारणतावच्छेदकसंबन्धत्वेनाभिमतसंबन्धपरमिति वादिप्रतिवादिनोस्तदनङ्गीकारेऽपि न किंचिच्च्युतमिति हृदयम् ।

† सामान्यत एतन्निष्ठात्यन्ताभावाप्रतियोगित्वस्य ।

एतन्निष्ठप्रागभावप्रतियोगित्वे च एतत्तन्तुसमवेतत्वमिति त्वन्मतेऽपि तदवस्थः परस्पराश्रयः । यदि त्वेतन्निष्ठप्रागभावप्रतियोगित्वं पटस्य नैतत्तन्तुसमवेतत्वप्रयोजकं किन्तु पटस्य स्वभावविशेषो, नापि पटे एतत्तन्तुनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वमेतत्तन्तुसमवेतत्वं प्रमाणाभावेन समवा*यानङ्गीकारात् । किन्तु एतत्तन्तूपादानकत्वं, ततश्च पट एतत्तन्तुवृत्तिकात्यन्ताभावप्रतियोग्यपि अथाप्येतत्तन्तूपादानक इति नांशित्वहेतौ विरुद्धत्वशङ्कासंभवोऽपीत्युच्यते तदा एतत्तन्तूपादानकत्वमप्येतत्तन्तुसं†बन्धं विना पटे नोपपन्नमिति एतत्तन्तूपादानकस्य पटस्य एतत्तन्तुषु संबन्धोऽवश्यमभ्युपेयः । एवं च येन संबन्धविशेषेण तन्तुषु पटः संबद्धस्तेनैव संबन्धेन पटेंऽशित्वव्यवहारोऽपि वक्तव्यस्तेनैव च संबन्धविशेषेण पुनस्तत्तन्तुवृत्तिकात्यन्ताभावप्रतियोगित्वं तस्य पटस्य मिथ्यात्वव्यवहारनिर्वाहकमन्यथाऽतिप्रसङ्गात् । एवं चांशितानियामकसंबन्धेन तन्तुवृत्तिकात्यन्ताभावप्रतियोगी चेत्पटस्तर्हि तस्यांशितैवासिद्धा । न हि पटस्तत्र तेनैव संबन्धविशेषेण वर्त्तते न वर्तते चेत्युभयमवकल्पते अव्याप्यवृत्तिपदार्थातिरिक्तस्थले भावाभावसमावेशस्यानुन्मत्तैरङ्गीकर्तुमशक्यत्वात् अंशितायां तदुपादानकत्वरूपतायास्त्वयाऽप्यङ्गीकृतत्वात्तदुपादानकत्वस्य च तदुपादानसंबन्धनान्तरीयकतया उपादेयस्योपादानसंसर्गिताऽऽवश्यकीति कथं तदुपादानसंसृष्टं सदप्युपादेयमुपादाननिष्ठोपादानतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगीति संभाव्येत । यदि तूपादानोपादेययोः कल्पिततादात्म्यादिः

* ब्रह्मातिरिक्तजगज्जातस्य नित्यत्वानङ्गीकारेण नित्यत्वघटितसमवायानभ्युगम इति भावः ।

† असंबद्धस्य जनकत्वे असंबद्धत्वाविशेषात् सर्वे सर्वेण जन्येतेत्यव्यवस्थाप्रसङ्ग इति भावः ।

संबन्ध इत्युपादानसंसृष्टं सदप्युपादेयमुपादाननिष्ठात्यन्ताभावस्य वस्तुतः प्रतियोगीति किमयुक्तमित्युच्यते तदा संबन्धस्य काल्पनिकतामप्रसाध्य संबन्धस्य काल्पनिकत्वं कथमिति कथय। यदि तु काल्पनिकत्वाकाल्पनिकत्वौदासीन्येन उपादेयमुत्पद्यमानमुपादानसंबद्धमुत्पद्यते इत्येष नियमो रक्षणीयस्तथा चोपादानोपादेयसंबन्धे काल्पनिकत्वस्येव अकाल्पनिकत्वस्याप्यनपेक्षणीयतया संबद्धतामात्रेण कार्यकारणभावनिर्वाहे मिथ्यात्वानुमानैः श्रुति--तदनुकूलतर्कैश्च संबन्धोऽयं सिद्ध्यन् काल्पनिक एव पर्यवसास्यति । न चैतावता अकाल्पनिकत्वेन कार्यकारणभावमाद्रियामहे । यथोक्तं खण्डनकारैरपरचैतत्सजातीयविषये । पूर्वसंबन्धनियमे हेतुत्वे तुल्य एव नौ । हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथेति। एवं च मिथ्यात्वानुमानात्पूर्वमकाल्पनिकत्वस्येव काल्पनिकत्वस्याप्यसमर्थनीयतया अकाल्पनिकसंबन्धेन यमर्थं त्वं साधयसि तमेवार्थं काल्पनिकत्वाकाल्पनिकत्वौदासीन्येन समर्थयामहे इत्यकिंचिदिदं मानोरथिकवादिनिग्रहणमिति प्रविश्याभिधत्से तर्हि काल्पनिकः संसर्ग इति ब्रुवाणो भवान् संसर्गस्य दोषाजन्यकल्पनैकशरीरत्वमभिमन्यते उत दोषजन्यकल्पनाशरीरत्वमिति भणतु तत्र प्रथमे कल्पनाया दोषाजन्यत्वे शाश्वतिकत्वेन संसर्गस्य नित्यत्वप्रसङ्ग इति वृद्धिमिच्छतो मूलहानिन्यायनिपातः । दोषजन्यत्वे तु स दोषः काल्पनिकोऽथ अकाल्पनिक इति विवेचनीयं, तत्र काल्पनिकत्वेऽनवस्थाप्रसङ्गो व्यक्त एव। न चेयमनवस्था न मूलक्षतिकरीति नानर्थावहेति वाच्यम् एवंविधानवस्थाया मूलक्षयकारित्वेनानर्थसहस्रहेतुतया दोषतायाः पूर्वमेवास्माभिः सम्यगुपपादितत्वात् कल्पनाजनकदोषस्याकाल्पनिकत्वे तु सर्वथाऽद्वयवादभङ्ग इति

नाविद्यि*कसंसर्गेणांशितां व्यवस्थाप्य वस्तुत उपादेयस्योपादाननिष्ठात्यन्ताभावप्रतियोगित्वमनुमाय जगन्मिथ्यात्वसाधने प्रभवसीति परीक्षका एवेह साक्षिणः । किंच भावाभावौ यदि न विरुध्येयातां तर्हि पटस्य तन्तुवृत्तिकात्यन्ताभावप्रतियोगित्वेऽपि न किंचित् त्रुत्यमिति किं तेन ते साधितं स्यादिति त्वमपि ज्ञातुं प्रारयसि । इत्यंशित्वरूपो हेतुर्विरुद्धोऽथवा †स्वयमसिद्ध इति न पाणिपिधानम् ।

यच्च अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभाववान् एतत्तन्त्वारब्धत्वादिति हेतौ व्यतिरेके एतन्निष्ठप्रागभावाप्रतियोगित्वमुपाधिरिति प्रकृतहेतोर्नैर्बल्येन स्थापनानुमानं न सत्प्रतिपक्षितं नापि स्थापनानुमाने एतत्तन्त्वनारब्धत्वमुपाधिः । उपाधिव्यतिरेकेण साध्यव्यतिरेकसाधने एतन्निष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वेन तस्यादूषकत्वादित्यभिहितं तदपि मन्दधियां चक्षुर्धूलिनिक्षेपमात्रं तथा हि प्रागभावस्यैतन्निष्ठत्वे हि एतन्निष्ठप्रागभावाप्रतियोगित्वमुपाधिरिति वाच्यं न चैतत्संभवति अयं प्रागभाव एतन्निष्ठात्यन्ताभावप्रतियोगी प्रागभावत्वात्प्रागभावान्तरवदिति त्वदुक्तरीत्यैव एतत्प्रागभावस्यैतन्निष्ठत्वविरहेण एतन्निष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वाभिधानानुपपत्तेः । किंच सिद्धान्ते प्रागभावानङ्गीकारेण एतन्निष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वाभिधानं नान्यतरासिद्धं किन्तूभयवाद्यसिद्धमिति तदुपाध्यभिधानं परमहासास्पदं ‡विदुषाम् । एवं च अयं पट एतत्तन्तुनिष्ठोपादानतावच्छेदकसंबन्धावच्छिन्नप्रति-

* अत्रत्यो विशेषस्तु वेदान्तसिद्धान्तमुक्तावलीकृतां मतनिराकरणावसरेऽभिधास्यते ।

† हेत्वप्रसिद्धिविरोधयोरन्यतरस्यावश्यंभाव इति भावः ।

‡ एतन्निष्ठध्वंसाप्रतियोगित्वं च यथा प्रकृते नोपाधिस्तथा स्वयमूहन्तां विचक्षणाः ।

योगिताकात्यन्ताभावाभाववान् एतत्तन्तुसंबद्धत्वादिति सत्प्रतिपक्षताऽपि ।

किंच अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वादिति स्थापनानुमाने एतत्तन्तुसंसृष्टत्वाभाव उपाधिरपि। न चाकाशादिष्ववृत्तिषु अनेतन्निष्ठत्वादेरिव साध्याव्यापकत्वमाशङ्कनीयम्। एतत्तन्तुसंसृष्टत्वाभावरूपोपाधिशरीरप्रविष्टसंसर्गस्योपादानतानियामकस्यैव वक्तव्यत्वेन तस्य चाकाशाद्यवृत्तिपदार्थव्यावृत्ततया उपाधेः साध्यव्यापकताया अक्षतत्वात्। अनिर्वचनवादे एतत्तन्तुसंसृष्टत्वमप्यनेतन्निष्ठत्वस्येवासिद्धमिति एतत्तन्तुसंसृष्टत्वाभावोऽपि नोपाधिरिति तु पुनराशापिशाचीकरग्रहणमात्रं तथा सत्यंशित्वरूपहेतोरेवासिद्धिप्रसङ्गात्। अंशित्वं तदुपादानकत्वं तच्च तत्संबन्धनान्तरीयकमित्यंशित्वमङ्गीकुर्वतो व्यावहारिकैतत्तन्तुसंसृष्टताया अनिच्छयाऽप्यङ्गीकृतत्वमस्त्येवेति न तदसिद्धिः। न च पारमार्थिकैतत्तन्तुनिष्ठत्वमुपाधिभावे प्रयोजकमिति वक्तुं युक्तं तथा सति धूमवान् वह्नेरित्यादिप्रसिद्धोपाध्युदाहरणस्थलेऽप्यार्द्रेन्धनसंयोगस्य पारमार्थिकस्यापेक्षणीयत्वे अनुपाधित्वप्रसङ्गादिति सुसूक्ष्मधियां विवेकः। अत्र चैतत्तन्तुसंसृष्टत्वाभावरूपोपाधिव्यतिरेकस्यैतत्तन्तुसंसृष्टत्वरूपस्य एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावरूपस्यैतत्तन्तुसमवेतत्वरूपस्य साध्यव्यतिरेकस्य साधकतया यद्व्यतिरेकस्य साध्यव्यतिरेकसाधकत्वं तस्यैव साध्यव्यापकत्वमितरांशेऽनुकूलतर्काप्रसरादिति नियमोऽपि सुरक्षितो भवति। अत एवोपाधिव्यतिरेकेण साध्यव्यतिरेकसाधने न व्यर्थविशेषणघटितत्वादिप्रयुक्तव्याप्यत्वासिद्ध्यादेरवसरोऽपि। एतत्तन्तुसंसृष्टत्वहेतो व्यर्थविशेषणघटितत्वाभावात्।

नास्ति चेह एतत्तन्तुसंसृष्टत्वाभावरूपोपाधेः साध्यवत्पक्षमात्रव्या-

वर्तकविशेषणानवच्छिन्नतया पचेतरतुल्यताऽपीति मादृशामिदं सुनिगूढं सुरचितमुपाध्युद्भावनवर्त्म इति सर्वचोद्यानवतारः । अस्ति यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्तन्तुसंसृष्टत्वाभावः । यत्रैतत्तन्तुसंसृष्टत्वाभावस्तत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वमित्युभयतो व्याप्तिग्रहात् साध्योपाध्योः समव्याप्तिः । ततश्चायं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभाववान् एतत्तन्तुसंसृष्टत्वादित्युपाध्यभावेन साध्यव्यतिरेकोन्नयनान्न स्थापनानुमानप्रसरसंभवः । एतत्तन्तुसंसृष्टत्वं यद्येतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावव्यभिचारि स्यात्तर्हि एतत्तन्तुजन्यमेव न स्यादित्यनुकूलतर्कावतार इति न व्यभिचारित्वशङ्काऽपि । एतत्तन्तुसंसर्गे तु एतत्तन्तुजन्यत्वे एतत्तन्तुसंसर्गो यद्येतत्तन्त्वसमवहिताजन्यत्वे सत्येतत्तन्तुसमवहिताजन्यः स्यादनुत्पन्न एव स्यादित्यनुकूलतर्कः सहाय इति किमेतेन तर्कवित्सु वृथा वाग्विग्लापनेन ।

अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वादिति मिथ्यावादिनां स्थापनानुमाने तु नानुकूलतर्कावतार इति कीदृशं हेतोरव्यभिचारित्वमिति परिशीलितशास्त्रसारा एव जानन्तु । मिथ्यात्वबोधकागमात्मकानुकूलतर्कसाहाय्यसंभावनं तु गगनशिरःस्फोटनायितमेव अनुमानबलादागमस्य तथार्थकथनं तथाऽऽगमार्थकथनेन चानुमानावतार इति परस्पराश्रयात् । यदि त्वनुमाननैरपेक्ष्येण तात्पर्यनिर्णायकलिङ्गषट्कानुग्रहलब्धजन्मनो मिथ्यात्वबोधस्य नानुमानाद्यपेक्षेति ब्रूषे हन्त तर्हि प्रत्यक्षादिसकलप्रमाणविरुद्धेऽर्थे तात्पर्यनिर्णायकलिङ्गावतार एव कथं भवितेति । परिशीलयतु भवानपि तटस्थतयेति ब्रूमः ।

विशेषश्चात्रत्यः श्रुतिवचनार्थविवेचनायां निरूपणीय इति विरमामो विस्तरभयात् ।

यदप्येतत्तन्तूपादानकान्यत्वस्य यच्चैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तच्चैतत्तन्त्वारब्धत्वाभाव इति व्यतिरेकव्याप्यावुपाधित्वेनोद्भावनं तेन च अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावाभाववान् एतत्तन्तूपादानकान्यत्वाभावादित्युपाध्यभावेन साध्याभावानुमानं ततश्च पटादेः सत्यत्वानुमाननिरसनं तदेतदपि बालव्यामोहनमात्रम् । अचैतत्पटभिन्नत्वस्योपाधित्वेन निरुक्तोपाध्यभावेन साध्याभावानुमानासंभवात् । स्थापनानुमाने एतत्तन्तुसंसृष्टत्वाभावस्योपाधित्वेन तस्य पटादेर्मिथ्यात्वासाधकत्वाच्च ।

किंच न तावदुपाध्यभावमात्रेण साध्याभावानुमानसंभवो न यावदुपाध्यभावेऽनुपाधिकत्वादिनिर्णयो हेत्वाभासत्वाद्यनुपसृष्टताग्रहो वा प्रकृते च एतत्तन्तूपादानकान्यत्वाभावस्यैतत्तन्तूपादानकत्वरूपतया एतत्तन्तूपादानकत्वेन एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावाभावरूपस्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वस्य साधने हेतौ व्यर्थविशेषणघटितत्वमप्यावश्यकं तथा हि यस्य मते अयं पटोऽपि एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी तन्मते एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वस्य केवलान्वयितया तत्साधने तन्तूपादानकत्वमात्रस्य हेतुत्वसंभवेऽधिकस्य वैयर्थ्यं न च तन्तूपादानकान्यत्वमात्रमुपाधिः एतत्तन्त्वारब्धत्वाभाववति पटान्तरे तन्तूपादानकत्वसत्त्वेन तन्तूपादानकान्यत्वरूपोपाधेः साध्याव्यापकत्वात् । नाप्येतदुपादानकान्यत्वमप्युपाधिरुपाध्यभावेन साध्याभावानुमाने उपादानत्वातिरिक्तभागस्य वैयर्थ्यात् । एतन्निष्ठध्वंसाप्रतियोगित्वस्योपाधित्वमप्युपाध्यभावेन साध्याभावोन्नयने व्यर्थविशेषणत्वादेव निरसनीयमिति तर्ककुशलानां विनोदः । तस्मादमीषां केषांचिदकुशलानामेतत्तन्तूपादानकान्यत्वस्योपाधित्वोद्भावनमबहुश्रुतानां प्रतारणमात्रमिति सुस्पष्टं निरूपकाणाम् ।

यथा चात्र प्रत्यनुमाने एतन्निष्ठप्रागभावप्रतियोगित्वं नोपाधिस्तथाऽत्र स्वावसरे साधूपपादितमिति सर्वं चतुरस्रम् ।

अयमेतत्तन्तुनिष्ठत्वेनाभिमतोऽत्यन्ताभाव एतत्तन्त्ववृत्तिः अभावत्वात् सत्ताऽभाववदित्यनुमानेन एतत्तन्तुनिष्ठाभावे एतत्तन्त्ववृत्तित्वसाधनेन बाधितमपि स्थापनानुमानं, न ह्येतत्तन्तुनिष्ठाभावे एतत्तन्त्ववृत्तित्वज्ञानकाले पटे एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावज्ञानकाल इव एतत्तन्तुनिष्ठत्वेनाभिमताभावे एतत्तन्त्ववृत्तित्वज्ञानकालेऽपि एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वधीरुत्पत्तुमर्हति । न चानिर्वचनवादिनो मम तदपि संमतमिति वक्तुं शक्नोषि निरुक्तानुमानेन स्थापनानुमानविषयापहारे स्थापनानुमानानुत्थानेन पटमिथ्यात्वासिद्ध्या प्रतिज्ञापरोधात् । एवं च भवदुपदर्शितगुणादिमिथ्यात्वानुमानेष्वपि सर्वत्र पूर्वोपदर्शितरीत्यैव विषयापहारस्य सुदर्शतया निरुक्तैवंविधमिथ्यात्वानुमानमात्रमुच्छिन्नमिति कस्य जयो व्यवतिष्ठतामिति सन्ति सन्त एव साक्षिणः ।

किंचैवं सति अयं हेतुरेतत्पचनिष्ठात्यन्ताभावप्रतियोगी हेतुत्वाद्धेत्वन्तरवदिति स्वव्याघातकत्वाज्जात्युत्तरमपीति सुसूक्ष्मधिषणैकगम्यम् ।

किञ्चायं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वादित्यत्रांशित्वरूपो हेतुर*प्रयोजकः । न ह्यंशीत्येव स्वोपादाननिष्ठात्यन्ताभावप्रतियोगी । उदासीनांश्यन्तराणां तु एतत्पटोपादाननिष्ठात्यन्ताभावप्रतियोगित्वमुचितम्, औदासीन्यादेव । न हि स्त्रीत्येव भार्या स्वस्रादेरपि स्त्रीत्वादितरथा तु स्वसा भार्या भवति स्त्रीत्वात् परिणीतावत् ।

* प्रयोजकत्वं च न न्यूनाधिकदेशवृत्तेस्तस्मिन् सत्यभवतस्तेन विनाऽपि भवतस्तदप्रयोजकत्वादिति भावः ।

इयं पत्नी न भवति स्त्रीत्वात् स्त्र्यन्तरवदित्यनुमिमानस्य लोकद्वयोच्छेद इति किन्नु इतोऽधिकं कष्टकरं शिष्टानाम् । यदि तु मन्त्रकरणकसंस्कारविरहान्नोदासीनयोषिदन्तरे पत्नीत्वव्यवहारापादनसंभवो, नापि परिणीतायां पत्नीत्वव्यवहारानापादनसंभवो वैवाहिकमन्त्रैरेव तस्योत्पाद्यमानत्वादित्युच्यते तर्हि प्रत्यक्षत एवैतत्तन्तूपादानकोऽयं पट इति पटान्तराणामेतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि न तद्दृष्टान्तावष्टम्भेन एतत्पटस्याप्येतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वसाधनमित्यपि तुल्यमेव ।

एवं च पटान्तरस्य यदेतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं न तदंशित्वेन किं त्वनेतदं*शित्वेन अनेतदंशित्वस्य चैतस्मिन् पटेऽसत्त्वादेव नैतत्पटे एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वरूपसाध्यसिद्धिरित्यतिस्वच्छमच्छधियामित्यंशित्वेनैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वसाधने साधु ते पुण्यपूरुषस्याद्वयनयनैपुण्यनाटनम् ॥

इदमत्र हृदयम् । सामान्यतोंऽशित्वस्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वप्रयोजकत्वाङ्गीकारे एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वस्य ज्ञानेच्छादिसाधारण्यादंशित्वस्य च तदुपादानकत्वरूपस्य ज्ञानेच्छादिव्यावृत्ततया न तत्साधारणमंशित्वमिति ज्ञानेच्छादिवृत्त्येतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वस्य किंचिदन्यदेव प्रयोजकमास्थेयमन्यत्र चान्यदेवेति परम†गौरवमित्येतत्तन्तुनिष्ठात्यन्ता-

* भवति चानेतदंशित्वं निरुक्तप्रयोजकतावदिति तस्य पक्षेऽसत्त्वाच्च साध्यसिद्धिरिति भावः ।

† सर्वसाधारणं ब्रह्मभिन्नत्वं तु नांशित्वं तथा सति ज्ञानेच्छादिसंग्रहेऽपि इतरांशीवेति दृष्टान्तासामञ्जस्यात् ।

कथंचिद् दृष्टान्तयोजनेऽपि वा ब्रह्मभिन्नत्वस्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वप्रयोजकत्वमसिद्धं न हि ब्रह्मभिन्नमित्येव तथेति वाद्यङ्गीकरोति । अङ्गीकारित एव वा पूर्वमित्यपि बोध्यम् ।

भावप्रतियोगित्वप्रयोजकं लाघवतर्कानुग्रहादनेतदंशित्वं वाच्यं तच्च ज्ञानेच्छादिसाधारणमिति अनेतदंशित्वस्यैतत्तन्तुनिष्ठात्यन्ताभावप्रयोजकत्वाभ्युपगमे अनेतदंशितया एतत्पटेऽसत्त्वात्पटान्तरे ज्ञानेच्छादौ च साध्यवति सर्वत्र सत्त्वान्नैतत्पटस्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वसिद्धिरिति स्वयमिह बहूहनीयं विज्ञानामिति किं बहुना वाचां विसर्गेण ।

यदि* तु पटे प्रात्यक्षिकव्यवहाराविसंवादेन प्रसञ्जितं यद् व्यावहारिकमेतत्तन्तुवृत्तित्वं तन्नापनोद्यतेऽनेनानुमानेन किन्तु व्यवहारानौपयिकं पारमार्थिकमेतत्तन्तुवृत्तित्वमत एव तु इतरांशिनो दृष्टान्ततया निदर्शनं, न हि पटत्वाश्रये अनेतत्पटे कदाऽप्येतत्तन्तुवृत्तित्वं, नासीदस्ति भविष्यतीति त्रैकालिकात्यन्ताभावस्य तत्र सत्त्वादेवं च दृष्टान्त इव दार्ष्टान्तिके एतत्पटेऽपि एतत्तन्तुनिष्ठाभावोऽनुमित्सितो न व्यावहारिकः किन्तु पारमार्थिक इति क्व नु दोषशङ्काप्रसङ्गोऽपि । पत्नी-स्वस्रादिव्यवहारस्थले तु पत्नीत्वस्वसृत्वयोरुभयोरपि व्यावहारिकतया समानसत्ताकत्वेन स्वस्वविषयेऽनवकाशतया बलवत्त्वेन च स्वसा भार्या भवति स्त्रीत्वात्परिणीतावदिति नाबाध्यानुमानप्रसरसंभवो येनैवं वयमुपालभ्येमहि अविद्याविलासलालसेन द्वैतिना देवानाम्प्रियेण । अत एव तु नरशिरःकपालं शुचि प्राण्यङ्गत्वाज्जीवच्छ्रोत्रियकरवदित्यादौ मलमूत्रपुरीषास्थिनिर्गतं ह्यशुचि स्मृतम् । नारं स्पृष्ट्वास्थि सस्नेहं सचेलो जलमाविशेत् । इति स्मृत्या नरशिरःकपालाशुचित्वसमर्पणेन मृतशिरःशौचानुमानबाधवत्प्रकृते असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि

* वादिनि सर्वथा निराकृतेऽपि स्वीयतर्ककार्कश्यसुसूचयिषया पुनर्वादभूमिमारचयति 'यदि त्विति' ।

मैथुने ॥ इति स्मृत्या उद्वाह्यायामेव कन्यकायां वैवाहिकमन्त्रैर्लौकिका-लौकिकपत्नीभावसमुत्पत्त्या स्वसरि नानुमानशतेनापि दुर्बलेन पत्नीभावोऽनुमातुं शक्यः। शास्त्रेण तदीयविषयापहारात्। प्रकृते तु व्यवहारौपयिकं यदेतत्तन्तुनिष्ठत्वं पटे न तद् द्विष्मः। यच्च द्विष्मः पारमार्थिकमेतत्तन्तुवृत्तित्वं न तद्व्यवहारेऽपेक्ष्यते प्रतीयमानस्य तात्कालिकस्यैव व्यवह्रियमाणत्वात्तस्य चानुमानेनानपाकरणीयत्वात्। अत एव तु। पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः। विरोधादुपजीव्येन न बिभेति कदाचनेति खण्डनकृतां सगर्वमास्फालनमिति ब्रूषे आस्तर्हि युक्तिमार्गानभिज्ञः परमसंकीर्णधीः प्राज्ञंमन्यमना इत्येव प्रतिपन्नोऽसि तथा हि पारमार्थिकमद्वैतमनुमित्सतो भवतोबाध—सत्प्रतिपक्षासिद्धिव्यभिचारादिदोषा व्यवहारमात्रं निघ्नन्तोऽकिंचित्करा इति तवतत्रानुमाने किं तदपाकरणमहोद्यमेन। न हि विभिन्नविषयकत्वे विरोधसंभावनाऽपि। एवं च बाधादयोऽवतीर्णा निर्विघ्नं लौकिकव्यवहारं निघ्नन्तु नाम न तु ते पारयिष्यन्ति पटादेः पारमार्थिकैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वानुमिताविति तदुद्भासनप्रयत्ने अर्थान्तरप्रसङ्ग इति निगृहीतो भवान्।

किंच तथा सत्युत्पत्तिकालावच्छिन्नो घटो गुणवान् पृथिवीत्वादित्यादौ बाधोऽवतीर्णोघटस्य व्यावहारिकं गुणवत्त्वं बाधमानोऽपि न तत्पारमार्थिकतां विहन्तुमलमिति घटे पारमार्थिकगन्धसाधने महदनिष्टं तवापद्येत। यदि तु हेतवः पारमार्थिकत्वसाधने न पर्याप्ता इति ब्रूषे हन्त तर्हि पटे एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वमपि तवाभिमतं पारमार्थिकं हेतवः कथं साधयेयुरिति समानं, यदि तु मिथ्यात्वबोधकश्रुत्यादिबलोपेतं मिथ्यात्वानुमानं लौकिकव्यावहारिकं घटं सहमानमपि पारमार्थिकं न सहते इति तच

पारमार्थिकाभावप्रतियोगित्वसिद्धावपि प्रकृते पारमार्थिकगन्धे प्रमाणानवतारात् श्रुत्यादिविरोधाच्च पारमार्थिको गन्धो न साधयितुं शक्यते इत्यवधाय वदसि हन्त तर्हि श्रुतीनामद्वैततात्पर्यकत्वादनुमानस्य पारिशेष्यादतात्त्विकार्थबोधकत्वं गन्धाद्यनुमितिस्थले, तात्त्विकार्थबोधकत्वं च जगन्मिथ्यात्वानुमिताविति विवेकः । मिथ्यात्वानुमानसहकारेण च श्रुतेरद्वैततात्पर्यकत्वमित्यन्योन्याश्रय एव ।

एतेन "आपाततो यदिदमद्वयवादिनीनामद्वैतमाकलितमर्थतया श्रुतीनाम् । तत्स्वप्रकाशपरमार्थचिदेव भूत्वा निष्पीडितादहह निर्वहते विचारादित्यभिदधतः खण्डनकृतोऽपि परास्ताः । न ह्यापाततोऽद्वयवादिश्रुतितात्पर्याकलनसंभावनाऽपि तावदस्ति निर्विशेषब्रह्मवादे न यावन्मिथ्यात्वसाधकार्थापत्त्यानुमानादिसहकारेण श्रुतितात्पर्यनिर्णयनान्तरीयकार्थापत्त्यनुमानादिविषयविशुद्धिसंभवः । श्रुतेः सर्वाभेदसमर्पकत्वं विरोध्यपसरणे विरोध्यपसरणं च सर्वाभेदसमर्पणफलकमत एव "पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः । विरोधादुपजीव्येन न बिभेति कदाचन ॥ इति स्वयमेव खण्डनकारः श्रुतेः पारमार्थिकाद्वैतबोधकत्वेन विरोध्यपसरणमाह ।

एवं च पारमार्थिकाद्वैतपरत्वे विरोध्यपसरणं विरोध्यपसरणे तु पारमार्थिकाद्वैतपरत्वमिति विस्पष्टमुक्तं भवति ॥

यदपि एतत्तन्त्वारब्धत्वरूपहेतोर्व्यभिचारित्वात् अयं पटः । एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभाववानित्यसत्प्रतिपक्षितत्वाभिधानं स्थापनानुमानस्य तदेतदपि मन्दमनीषितमेव न ह्येतत्तन्तुपदेन पटोपादानभूताः कतिपये तन्तवः किन्तु येषु पटो व्यासज्यवर्तते त एवैतत्तन्तुपदेन धर्तव्या न च तावत्तन्तुवृत्तिकात्यन्ताभावप्रतियोगी पटः किन्तु पटोपादानकतिपयतन्तुवृत्तिकात्यन्ताभावप्रतियोगी तथा

च कतिपयतन्तुवृत्तिकात्यन्ताभावप्रतियोगी भवन्नपि न तावत्तन्तुवृत्तिकाभावप्रतियोगीति कथं हेतोर्व्यभिचारित्वं ततश्च यथा एको न द्वाविति प्रतीत्या प्रत्येकं द्वित्वावच्छिन्नभेदसत्त्वेऽपि द्वित्वावच्छेदेन न द्वित्वावच्छिन्नभेदस्तथा प्रकृतेऽपीति स्पष्टमदुष्टत्वं हेतोः ।

एतन्निष्ठप्रागभावाप्रतियोगित्वरूपोपाध्यादिदोषस्तु पूर्वमेव परासित इति निष्कण्टकः पन्थाः ॥

एवमेव तु समवायसंबन्धावच्छिन्नोऽयमेतत्पटात्यन्ताभाव एतत्तन्तुनिष्ठः एतत्पटप्रतियोगिकाभावत्वात्संयोगसंबन्धावच्छिन्नैतत्पटप्रतियोगिकाभाववदिति वादि*नामसमीच्याभिधानमपि प्रत्युच्यते। तथा हि सामान्यत एतत्तन्तुनिष्ठत्वसाधने सिद्धसाधनं वादिनाऽपि एतत्तन्तौ कालिकसंबन्धेन समवायसंबन्धावच्छिन्नैतत्पटप्रतियोगिकाभावाभ्युपगमात्। स्वरूपेणैतत्तन्तुवृत्तित्वसाधने तु समवायसंबन्धावच्छिन्नैतत्पटप्रतियोगिकाभावस्यैतत्तन्तौ स्वरूपेण वृत्तित्वासत्त्वाद् बाधः। न हि त्वयापि एतत्तन्तौ पटसमवायिनि व्यावहारिकः समवायसंबन्धावच्छिन्नैतत्पटात्यन्ताभावोऽभ्युपेयते । तथा सति व्यवहारसङ्करप्रसङ्गात् । अभ्युपेयते तु पारमार्थिकः समवायसंबन्धावच्छिन्नैतत्पटप्रतियोगिकाभाव एतत्तन्तौ स तु पारमार्थिको ब्रह्मस्वरूपविश्रान्त इति न तस्य स्वरूपेण साध्यतावच्छेदकसंबन्धेनैतत्तन्तुवृत्तित्वं न हि ब्रह्मापि निर्विशेषं क्वचिदपि केनापि संबन्धेन वृत्तिमत् । तथा सति तस्यापि मिथ्यात्वप्रसङ्गात् । यदि तु कल्पितरूपेण मिथ्यात्वघटकाभावस्य स्वरूपेण वृत्तिमत्त्वमुच्यते हन्त तर्हि कल्पितरूपेण प्रतियोगितदभावयोरेकत्र वृत्तितामिच्छन् कथं जगत्साङ्कर्याय प्रयतसे । न हि प्रतियोगितदभावौ उभावपि

* अद्वैतसिद्धिकताम् ।

कल्पितौ चोभावपि चोभय*त्र विरोधिताघटकसंबन्धेन वृत्तिमन्ताविति कल्पयितुं शक्नोषि । तदवश्यं प्रतियोगितदभावयोर्द्वयोरेकः पारमार्थिकोऽपरोव्यावहारिक इति त्वदभ्यूहितरीत्या तवाङ्गीकरणीयमापद्यते । न च तदपि तव क्षेमाय प्रतियोगिनस्तात्त्विकत्वे सिद्धान्तच्युत्या तदभावस्यैव तात्त्विकताऽऽस्थेया तात्त्विकस्य च तस्य ब्रह्मरूपतैव वक्तव्या न च ब्रह्म सर्वथा अवृत्तिकं स्वरूपेण वृत्तिमदिति साम्प्रतमिति पूर्वमेवाभिहितमित्यकिंचिदिदम् ।

किंचात्रानुमाने समवायसंबन्धावच्छिन्नैतत्पटप्रतियोगिताकात्यन्ताभावभिन्नत्वमुपाधिस्तस्य स्वरूपेणैतत्तन्तुनिष्ठं यद्य†त्तद्व्यापकत्वात् । एतत्पटप्रतियोगिकाभावत्वं तु समवायसंबन्धावच्छिन्नैतत्पटप्रतियोगिकाभावेऽपि वर्तते न च तस्मिन् निर्विशेषवादिनाऽपि समवायसंबन्धावच्छिन्नैतत्पटप्रतियोगिकाभावभिन्नत्वमङ्गीक्रियते स्वस्मिन् स्वभेदानङ्गीकारादिति साधनाव्यापकत्वमिति भवत्युपाधिरिति । न च पक्षेतरो नोपाधिरन्यथा प्रसिद्धसाध्यके पर्वतो वन्हिमानित्यादावपि पर्वतेतरत्वमुपाधिरित्यनुमानमात्रमुच्छिद्येतेति वाच्यं बाधावतारे वन्हिरनुष्णो द्रव्यत्वादित्यादौ वन्हीतरत्वस्योपाधितायाः सर्ववाद्यभिमतत्वेन प्रकृतेऽपि बाधावताराविशेषेण पक्षेतरस्योपाधितायां दोषानवकाशात् । न च पटेऽवतीर्णः समवायसंबन्धावच्छिन्नैतत्पटात्यन्ताभावाभावरूपो बाधो व्यावहारिको न तात्त्विक इति कथं पक्षेतरत्वमुपाधिर्भवेदिति । तत्किं वन्हिरनुष्णो द्रव्यत्वादित्यादाववतीर्णोऽनुष्णत्वाभावरूप उष्णत्वविश्रान्तो बाधः पारमार्थिको

* प्रतियोगिमति तदभावः तदभाववति च प्रतियोगीति भावः ।

† उपाधिलक्षणे हि साध्यवत्तानिश्चयविषयीभूतधर्मिव्यापकत्वं प्रविष्टं न तु न तु सामान्यतः साध्यव्यापकत्वमित्युपाधिरहस्यमिति निगूढगदितम् ।

यद्येवं तस्य वैजात्यसमुद्भावने वैयात्येन प्रवृत्तोऽसि । तस्मादविशेषात्प्रकृते समवायसंबन्धावच्छिन्नैतत्पटप्रतियोगिकाभावभिन्नत्वं भवत्युपाधिरिति चित्सुखाचार्यानुमानसजातीयं दूषितमदोऽद्वैतसिद्धिकृतामप्यनुमानमिति स्वस्थाः सुखमास्महे ।

एवं च अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वादिति स्थापनानुमाने एतत्तन्त्ववृत्त्यन्ताभावः साध्यविशेषणासिद्धिः । एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभाववत्पटश्च बाधः । एतत्तन्तुसंसृष्टत्वहेतुना सत्प्रतिपक्षितत्वम् । एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावव्याप्यांशित्वं विरोधः । एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभाववद्वृत्त्यंशित्वं व्यभिचारः । एतत्तन्तुसंसृष्टत्वाभाव उपाधिरिति सोपाधिकत्वाद् व्याप्यत्वासिद्धत्वमित्येते दोषाः स्फुटमेव वर्तन्ते । तस्माल्लोके दोष*त्रयोत्तम्भितशरीराणामेवानुज्जीवनं चेद् बहुलदोषदूषितस्यास्य जरतश्चित्सुखाचार्यानुमानशरीरस्य सुश्रु†तप्रयोगेऽपि कथमुज्जीवनप्रत्याशेति किमु वक्तुमवशिष्यते कुशलेषु ॥

किञ्च वादिनामतिप्रसिद्धे घटो मिथ्या दृश्यत्वादिति प्रयोगेऽपि प्रतिभा‡सशरीरत्वमुपाधिः । न च दृष्टिसृष्टिपक्षे प्रतिभासशरीरत्वस्य दृश्यत्वेऽपि सत्त्वेन साधनव्यापकतया कथमुपाधित्वमिति वाच्यम् । न हि सर्वमतसाधारण्येन वादारम्भः सुशकः । चार्वाकादेः प्रत्यक्षातिरिक्तप्रमाणाङ्गीकार एव विसंवादात् सर्वशून्यवादिनो माध्यमिकस्य तु प्रमाणप्रमेयेषु यावत्स्वेव विसंवादात् । एवं च दृष्टिसृष्टिपक्षस्य स्वयं ब्रह्मसूत्रेष्वेव सूत्रकारेण निराकृतत्वात्तन्मततात्पर्येणोपा-

* सुश्रुतोनाम महर्षिरायुर्वेदवित् तदुक्तः प्रयोग, औषधं, पक्षान्तरे भूरिश्रुतो विद्वान् तत्प्रयोगः पञ्चावयवादिन्यायप्रयोगस्तत्करणेऽपि ।

† कफवातपित्ताख्यं धातुत्रयम् ।

‡ परमतसंप्रतिपत्त्यर्थमुपाध्युद्भावनम् ।

धिसंरम्भ*स्यानुपक्रान्ततया तथाऽभिधानं केवलं पर†स्य पलायनमात्रम् । इतरथा तु पञ्चावयवादिप्रयोगकालेऽपि चा‡र्वाकस्यानभिमतिमात्रमुद्घाट्य तावतैवानुमानाप्रामाण्यसाधने जगद्व्यवहारोपप्लवप्रसङ्ग इति स्पष्टमेव । एवं च घटोमिथ्यात्वाभाववान् प्रतिभासशरीरत्वाभावादित्युपाध्यभावेन साध्याभावोन्नयने कथं मिथ्यात्वानुमानप्रवृत्तिरिति प्रेक्ष्यतां ताटस्थ्येन निरूपकैः कृतगुरुकुलश्रमैः ।

एवं च प्रकृतानुमाने प्रातिभासिकत्वमप्युपाधिस्तस्य शुक्तिरूप्याद्यवच्छेदेन साध्यव्यापकत्वाद् घटाद्यवच्छेदेन साधनाव्यापकत्वाच्च । न च देहात्मैक्ये निर्विशेषब्रह्मज्ञानमात्रनिवर्त्ये मिथ्याभूतेऽपि ब्रह्मज्ञानेतरज्ञानबाध्यत्वरूपप्रातिभासिकत्वाभावेन साध्याव्यापकत्वमुपाधेरिति वाच्यम् । यतो ब्रह्मज्ञानस्य बाधकतायाजगतो बाध्यतायाश्च भूयसा प्रबन्धेन पूर्वमेव निराकृततया ब्रह्मज्ञानेतरज्ञानबाध्यत्वं न प्रातिभासिकत्वं किन्तु यथार्थज्ञाननिवर्त्यत्वं तच्च देहात्मैक्येऽपीति साध्यव्यापक§ताऽस्त्येवाचतता । एवं च दृश्यत्वहेतुकस्थलं सोपाधि । एतेन ब्रह्मज्ञानेतरज्ञानबाध्यत्वं प्रातिभासिकत्वं तच्च ब्रह्मज्ञानमात्रनिवर्त्ये देहात्मैक्ये व्यभिचरतीति न मिथ्यात्वव्यापकता । उपाध्यभावेन साध्याभावानुमाने घटो मिथ्यात्वाभाववान् बाध्यत्वाभावादित्येव साध्यसिद्धिसम्भवे ब्रह्मज्ञानेत-

* नास्माकं योगाचारेण सह विप्रतिपत्तिः किंतु निर्विशेषब्रह्मवादिना न च बाह्यार्थानङ्गीकारो ब्रह्मवादिनस्तस्य ब्रह्मसूत्रेषु स्फुटं निरासात् । ज्ञानविश्रान्तबाह्यार्थाभ्युपगमपक्षोऽपि च सूत्रनिरसनीय इति न तत्यत्नसमादरोऽपि निर्विशेषब्रह्मवादिनामिति तात्पर्यम् ।

† वादिनः ।

‡ चार्वाकस्यानुमानादेः प्रामाण्यानङ्गीकारादिति भावः ।

§ अस्ति च सिद्धान्तसिद्धा साध्योपाध्योः समव्याप्तिरित्यपि द्रष्टव्यम् । अस्माकं तु साध्योपाध्योः समव्याप्तौ न निर्बन्धो व्यापकव्यभिचारिणो व्याप्यव्यभिचारितया आवश्यकतया तत एवोपाधेर्दूषतामूलसंरणात् किन्तु वादिसंतोषदानार्थमेष प्रयासः ।

रज्ञानबाध्यत्वाभावस्य हेतूकरणे व्यर्थविशेषणघटितत्वेन व्याप्यत्वासिद्धिरपीत्यद्वैतसिद्धिकृतामभिधानं निरस्तम् । पूर्वोदितरीत्या ब्रह्मज्ञानस्याबाधकतया ब्रह्मज्ञानेतरज्ञानबाध्यत्वरूपस्य प्रातिभासिकत्वस्य दुर्भणतया तथा वक्तुमशक्यत्वात् । निरुक्तरीत्योपाध्यभिधाने उपाध्यभावेन साध्याभावानुमाने व्यर्थविशेषणघटितत्वाभावाच्च । न हि ब्रूमहे ब्रह्मज्ञानेतरज्ञानबाध्यत्वमुपाधिः किन्तु य*थार्थज्ञाननिवर्त्यत्वं न च तच्छरीरे व्यर्थविशे†षणप्रवेशो यत एवमुच्येत भवता । एवं च घटो मिथ्यात्वाभाववान् ज्ञाननिवर्त्यत्वाभावादित्युपाध्यभावेन साध्याभावोन्नयने न कश्चिद्दोष इति सुज्ञानं विज्ञानाम् ।

न च मिथ्यात्वस्य ज्ञाननिवर्त्यत्वरूपतया तदभावसाधने पुनर्ज्ञाननिवर्त्यत्वाभावस्य हेतुत्वे साध्याविशेषः ।

ज्ञाननिवर्त्यत्वाभावव्याप्यज्ञाननिवर्त्यत्वाभाववान् घट इति परामर्शकाले एव पक्षे साध्यस्यावगमादिति वाच्यम् । वादिविप्रतिपत्त्यनुरोधेन स्वस्य साध्यवत्तानिश्चयकालेऽपि परस्यानुमिमापयिषया तथा प्रयोगे परार्थानुमितौ तस्या‡दोषत्वात् ।

अस्तु§ वा स्वार्थानुमितिपरार्थानुमितिसाधारण्येन साध्याविशेषो दोषस्तथाऽपि मिथ्यात्वं घटावृत्ति सोपाधिकत्वव्याप्यत्वादित्यनुमानेन मिथ्यात्वस्य घटावृत्तित्वोन्नयने न कश्चिद्दोष इति सर्वमनवद्यमित्यनपरपरिशीलितं मादृशामिदमजिह्ममुपाध्युद्भावनवर्त्मेति । शम् ।

* अत्र यथार्थपदं संपातायातम् ।
† याथार्थ्यस्योपाधिशरीरे न प्रवेश इति तात्पर्यम् ।
‡ साध्याविशेषस्य ।
§ अनुमित्वयाऽनुमितेः स्वपरसाधारण्यादिति भावः ।

घटो मिथ्या दृश्यत्वादित्यत्र दोषजन्यज्ञानविषयत्वमप्युपाधिस्तस्य साध्यव्यापकत्वं शुक्तिरूप्यादौ साधनाव्यापकत्वं घटादाविति भवति तथात्वम् । न च घटादेरप्यविद्यात्मकदोषजन्यतया साधनव्यापकत्वे कथमुपाधित्वं तस्येति वाच्यम् । अविद्याया अग्रे स्वावसरे निरसिष्य*माणत्वेन घटादावविद्याजन्यताया वक्तुमशक्यत्वात् ।

अविद्याङ्गीकारपक्षेऽपि वा न साधनव्यापकत्वनिश्चयः । दोषजन्यज्ञानविषयत्वज्ञानस्यापि दोषजन्यत्वेनाप्रामाण्यज्ञानास्कन्दिततया स्वविषयानिश्चायकत्वेन घटाद्यवच्छेदेन दोषजन्यताया अनिश्चयेन दोषजन्यज्ञानविषयत्वस्य घटादावनिर्णयात् । तस्मादिह दोषपदेन न स्थास्नुरनागन्तुकाविद्यात्मको दोषो विवक्षितः किन्तु आगन्तुकश्चाकचिक्यचक्षुर्घर्षणदूरत्वादिर्दोष एव । एवं च दोषजन्यज्ञानविषयत्वरूपोपाधिर्भवति मिथ्यात्वव्यापकोऽथ दृश्यत्वाधिकरणे घटादावागन्तुकदोषजन्यत्वविरहात्साधनाव्यापक इत्युपाध्यभावेन साध्याभावानुमाने दृश्यत्वहेतुकानुमित्युपरोधः ।

न च दोषजन्यज्ञानविषयत्वाभावरूपहेतुघटकस्य दोषजन्यत्वाभावस्यैव हेतुत्वसम्भवे व्यर्थविशेषणघटितत्वाद् व्याप्यत्वासिद्धौ दोषजन्यज्ञानविषयत्वाभावरूपो हेतुरिति शङ्क्यम् । दोषजन्यज्ञानविषयत्वाभावरूपे हेतौ प्रविष्टस्य दोषजन्यत्वस्य ज्ञानेऽन्वयादभावानन्वयित्वेनाखण्डाभावघटकतया वैयर्थ्यशङ्काऽनुदयात् ॥

एवं च दोषजन्यत्वमप्युपाधिस्तस्य शुक्तिरूप्यादौ साध्यव्यापकत्वात् । घटादौ साधनाव्यापकत्वाच्च । न च घटादेरप्य-

* यादृग्रूपावच्छिन्नाविद्याङ्गीकारोवादिनस्तद्रूपावच्छिन्नायां तस्यां न प्रमाणावतार इत्यग्रे विवेचयिष्यामः ।

विद्यात्मकदोषजन्यत्वेन साधनाव्यापकत्वं पुनरप्याशङ्कनीयं तथा सति ब्रह्मातिरिक्तप्रपञ्चमात्रस्याविद्यात्मकदोषजन्यत्वेन दोषत्वावधारकज्ञानस्याप्यविद्याजन्यत्वेन दोषत्वस्यैव दुरवधारणत्वात् ।

आगन्तुकदोषस्य तु दोषत्वे तस्य साधनाव्यापकत्वमपीति भवति दोषजन्यत्वं दृश्यत्वहेतुकस्थले उपाधिः ।

यदि तु घटो मिथ्यात्वाभाववान् दोषजन्यत्वाभावादिति प्रयोगे जन्यत्वाभावस्यैव हेतुत्वसंभवेऽधिकभागस्य व्यर्थविशेषणघटितत्वादुपाध्यभावेन साध्याभावानुमाने हेतुर्व्याप्यत्वासिद्ध इत्युच्यते तदा जन्यत्वाभावस्य घटादावसिद्धतया हेतुः स्वरूपासिद्ध इति तद्वारणाय दोषपदसार्थक्यमित्यवधारयत्वायुष्मान् भवान् ।

यदि तु हेतुकुक्षिनिक्षिप्तविशेषणानां व्यभिचारवारणमेव फलमित्यतद्वारकस्य दोषपदस्य वैयर्थ्यं दुरुद्धरमिति भ्राम्यसि तत्किं स्वरूपासिद्धिवारकस्य सार्थक्यं नाश्रौषीः । चक्षुषस्तैजसत्वानुमाने रूपादिषु पञ्चसु मध्ये इति मध्यान्तभागस्य स्वरूपासिद्धिवारकतयैव साफल्यस्य प्रायो*वादिभिरङ्गीकृतत्वात् स्वरूपासिद्धिवारकत्वेऽपि साफल्यमनुमन्यते ।

यदि तु स्वरूपासिद्धिवारकस्यापि मध्यान्तभागस्य साफल्ये व्याप्तिग्रहोपयिकत्वं तन्त्रमेवं च चक्षुषस्तैजसत्वानुमाने मध्यान्तभागस्य व्याप्तिग्रहोपयिकतया साफल्यं, व्याप्तिग्रहानौपयिकस्य तु दोषपदस्य प्रकृते कथं सार्थक्यसंभवः ।

अत एव तु क्षित्यङ्कुरादिकं कर्तृजन्यं शरीराजन्यत्वादित्यनुमाने शरीरपदानुपादाने अजन्यत्वस्य क्षित्यादावसत्त्वात्स्वरू-

* चक्षुरादीन्द्रियाणां भौतिकत्ववादिनां नैयायिकानां वैशेषिकाणां च तदनुमानं न तु सांख्यादीनामिति प्रायःपदम् ।

पासिद्धिः । तदुपादाने तु व्यभिचारावारकविशेषणघटितत्वेन हेतो-र्व्याप्यत्वासिद्धिः । तदुक्तं प्रा*चीनैरपि "एकाम†सिद्धं परिहरतो द्वितीयापत्तिः" इत्युच्यते तदा प्रकृतसाध्यव्याप्यतावच्छेदकस्वसमानाधिकरणविशिष्टान्तरघटितत्वमात्रं न व्यर्थविशेषणघटितत्वं किन्तु प्रकृतपक्षवृत्तितावच्छेदकं यत् प्रकृतसाध्यव्याप्यतावच्छेदकमेवंविधं यत्स्वसमानाधिकरणविशिष्टान्तरं तद्घटितत्वं तत् । एवं च स्वरूपासिद्धिवारकस्य साफल्यं स्फुटमेव सिद्ध्यति । अत एव तु शब्दखण्डमण्यालोके विशेषगुणान्तरासमानाधिकरणैमात्रवृत्तिगुणत्व-हेतौ शब्देतरार्थकस्यान्तरपदस्य सार्थक्यं पक्षधरमिश्रैः समर्थितम् । न हि युक्त्याऽर्थसिद्धौ प्राचां विरोधमात्रमनर्थावहम् । अतएव तु मथुरानाथभट्टाचार्यैः असिद्धिसिद्धान्तसंग्रहे "न चैवमेकामसिद्धिमित्याचार्याभिधानविरोध इति वाच्यं । व्यर्थविशेषणतया व्याप्तिविरहस्याभ्युपगमेऽपि तदभिधानस्याशुद्धत्वात् । शरीरजन्यत्वाभावस्याखण्डतया व्यर्थविशेषणत्वस्यैव तत्र विरहाच्च" इति स्पष्टमुदयनाचार्यग्रन्थमुपेक्षाङ्गीक्रिरे ।

वस्तुतस्तु अखण्डाभावघटकतया दोषपदसार्थक्यमिति नेह शङ्कावसरोऽपीति कृतधियां निर्णयः ॥

यत्र तु स्वरूपासिद्धिवारकतयाऽपि न साफल्यं नीलधूमादि-हेतुकस्थले तत्र व्यर्थविशेषणघटितत्वेन व्याप्यत्वासिद्धत्वमेवं चेह दोषपदस्य स्वरूपासिद्धिवारकतया सार्थक्यमिति न किञ्चिदवद्यम् । केचित्तु व्यर्थविशेषणत्वेऽपि स्वव्यापकसाध्यसामानाधिकरण्यरूपा

* उदयनाचार्यैः ।

† स्वरूपासिद्धिरूपामसिद्धिम् । परिहरतः शरीरविशेषणेन वारयतः । द्वितीयापत्तेः । शरीरविशेषणस्य व्यर्थतया व्याप्यत्वासिद्ध्यापत्तेः ॥

साध्याव्यभिचरितसाध्यसंबन्धित्वरूपा वा व्याप्तिरस्त्येव नीलधूमादिहेतौ, तस्मादनुमितिप्रतिबन्धकज्ञानविषयत्वविरहान्न हेत्वाभासत्वं किन्तु उद्भावितदृष्टान्तस्य साध्यवैकल्यादिवद्धिकप्रयोगस्यापि निग्रहस्थानत्वमिति तथा प्रयुञ्जानस्य वादिनो निग्रहस्थानोद्भावने भवति निग्रहमात्रं नतु तावता तस्य हेत्वाभासत्वप्रत्याशाऽपीत्याहुः । युक्तं चैतत् । निग्रहस्थानविभाजकसूत्रस्थचकारेण अनुक्तसमुच्चयसूचकेन उद्भावितदृष्टान्तस्य साध्यवैकल्यादिवत्तस्यापि समुच्चिकीर्षितत्वात् ।

किंच दृश्यत्वहेतुकमिथ्यात्वसाध्यकस्थले अयथार्थज्ञानगोचरत्वमुपाधिस्तस्य साध्यव्यापकत्वं शुक्तिरूप्यादौ साधनाव्यापकत्वं च घटादौ । एवं सकम्पप्रवृत्तिजनकत्वं विसंवादीच्छाविषयत्वं चोपाधिः । अस्ति च तयोः शुक्तिरूप्यादौ साध्यव्यापकत्वं घटादौ साधनाव्यापकत्वमित्युपाधिभावः ।

एवं च घटो मिथ्यात्वाभाववान् अयथार्थज्ञानगोचरत्वाभावात् । सकम्पप्रवृत्तिजनकत्वाभावात् । विसंवादीच्छाविषयत्वाभावादित्याद्यनुमेयमिति ।

ननु सर्वस्यापि पदार्थस्य यत्किञ्चिदयथार्थज्ञानगोचरत्वेन अयथार्थज्ञानगोचरत्वं साधनव्यापकमिति कथं तस्योपाधित्वमिति चेन्न उपाध्यभावस्य सत्प्रतिपक्षमुद्रया दूषकत्वमातिष्ठमानानां रत्नकोषकृतां मते करका पृथिवी कठिनसंयोगवत्त्वादित्यत्र अनुष्णाशीतस्पर्शवत्त्वस्य साधनव्यापकस्यापि क्वचिदुपाधित्वाभ्युपगमात् । न च तत्र कठिनसंयोगाभाववत्पृथिवीरूपस्वरूपासिद्धिसांकर्ये संभेदे नान्यतरवैयर्थ्यमिति न्यायेन साधनव्यापकोऽप्युपाधिरभ्युपेयते अत्र तु कथं तथा स्याद्दोषान्तरासाङ्कर्ये इति वाच्यम् । ब्रह्मज्ञानस्याबा-

धकतायाः पूर्वं सुव्यवस्थापितत्वेन घटादीनां व्यावहारिकाणां मिथ्यात्वस्य च प्रतीयमानत्वे सति ब्रह्मज्ञानबाध्यतापर्यवसायित्वेन तदसिद्धा दोषान्तरसाङ्कर्यस्याद्यापि सत्त्वात् ।

एवं च दोषान्तरसाङ्कर्ये साधनव्यापकोऽप्युपाधिरिति सुस्फुटमुपाधितत्त्वविदाम् ।

किंचाधिकारिकाणामपान्तरतमःप्रभृतीनामेव ये पदार्था ज्ञानगोचरास्तत्र हेतोस्सत्त्वादयथार्थज्ञानगोचरत्वस्य विरहाच्च भवति साधनाव्यापकत्वमप्युपाधेः । न च तादृशपदार्थसद्भावे प्रमाणाभाव इति वाच्यं यादृशप्रमाणेनाधिकारिकाः पुमांसः सिध्यन्ति तेनैव प्रमाणेन तादृशपदार्थस्यापि प्रमापणादिति स्पष्टमुपनिषत्तत्त्वविदाम् ।

एवं योगिज्ञानाविषयत्वं बाधक*ज्ञानगोचरत्वं संवादिप्रवृत्त्यजनकत्वं विसंवादीच्छाविषयत्वं चोपाधिः । एवं चेह बाध्यत्वमप्युपाधिः । न च बाध्यत्वस्य दृश्यत्वादिना घटादावप्यनुमेयत्वात्साधनव्यापकतया कथमुपाधित्वं तस्येति शङ्क्यम् । शब्दाजन्यवृत्तिविषयत्वलक्षणदृश्यत्वस्य वा सप्रकारकज्ञानविषयत्वलक्षणस्य दृश्यत्वस्य वा भ्रमप्रमाविषयपदार्थसाधारण्येन अबाध्यत्वव्याप्यत्वविरहेऽपि भागवतज्ञानगोचरत्वलक्षणदृश्यत्वस्य अबाध्यत्वव्याप्यतया साधारण्येन दृश्यत्वस्य बाध्यत्वाबाध्यत्वव्याप्तिशून्यत्वेन दृश्यत्वेन बाध्यत्वानुमानाप्रवृत्तेः ।

न चैतेषु मिथ्यात्वाभावसाध्यकानुमानेषु ब्रह्मभिन्नत्वाभाव उपाधिः । भवति च ब्रह्मभिन्नत्वाभावो मिथ्यात्वाभावनिश्चयविषयीभूतब्रह्मव्यापकोऽथ हेत्वव्यापको ब्रह्मभिन्ने ब्रह्मभिन्नत्वाभावविर-

* ब्रह्मज्ञानं तु न तथेति प्रत्यपीपदाम पूर्वमेवेति हृदयम् ।

हात् । एवं च घटो मिथ्या ब्रह्मभिन्न*त्वादित्युपाध्यभावेन साध्याभावोऽनुमास्यते । एवं चे†ह बाध्यत्वाभावः । प्रवृत्तिजनकत्वाभावः । दोषजन्यत्वाभाव इत्येवमाद्यनेकोपाधिग्रस्ततया मिथ्यात्वाभावसाध्यकानुमानजातस्याप्यनवतारः । जगन्मिथ्यात्वबोधकश्रुत्युपष्टम्भश्चात्रानुकूलतर्कौ जगन्मिथ्यात्वसाधकानुमानमानमात्रे इत्येषोऽप्यतिशय इति वाच्यम् ।

न हि ब्रह्मभिन्नमित्येव मिथ्या स्यादिदं जगत् । इतरथा तु जगद्भिन्नं ब्रह्मेति ब्रह्मणोऽपि मिथ्यात्वमाम्नायेत । स्या‡दप्येतदेवं यदि स्वप्रकाशाद्वयचैतन्यरूपत्वं ब्रह्मणः सत्त्वमभ्युपेयेत । अभ्युपेयते तु सोऽभिध्याय§शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः । जगत्सर्वं शरीरं ते । इत्यादिपारमर्षवचनोपबृंहिताभिः य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । इत्यादिश्रुतिभिः सर्वज्ञत्व–सर्वशक्तित्व–सर्वजगन्नियमनोत्पत्तिस्थितिसंहारादिलक्षणस्वेतरसमस्तवस्तुविलक्षणधर्मयोगिनो निरतिशयानन्दोदधेः करुणावरुणालयस्य गीतादि‖तविराट्स्वरूपस्य समस्तचिदचिच्छरीरकस्य निरतिशयसर्वैश्वर्यधाम्नोऽनन्तविभूतेस्सतश्चैत¶न्यादियोगिनः परिपूर्ण-

* मिथ्यात्वसाध्यकब्रह्मभिन्नत्वं यथा हेत्वाभासस्तथाऽनुपदमेव व्यक्तीभविष्यति ।

† घटोमिथ्यात्वाभाववानित्यनुमाने । ‡ ब्रह्मभिन्नत्वाज्जगन्मिथ्यात्वमिति ।

§ इमं श्लोकं व्याचक्षाणेन कुल्लूकभट्टेन वस्तुस्वभावपारतन्त्र्यात् "अत्र त्रिवपिडवेदान्तसिद्धान्त एव मनोरभिमत इति प्रतिभाति मे" इत्युक्तम् ।

‖ दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरमिति प्रतिज्ञाय यद्रूपं दर्शयामास भगवान् यच्च लब्धदिव्यचक्षुरनितरसाधारणोऽर्जुनो निरैक्षिष्ट तदपि चेत्कल्पनैकशरीरं रूपं तर्हि त्वदुक्तिमात्रं बालकल्पनायितमिति किं ततोऽस्मत्पक्षक्षपणाशङ्केति विदाङ्कुर्वन्तु विद्वांसः । ¶ अयं चार्थो वचनार्थविवेचनावसरे साधु समर्थयिष्यते ।

षाड्गुण्यरूपत्वं सत्त्वं, ततश्च जगतः कल्पितत्वे अकल्पितैतादृश-गुणत्वं ब्रह्मणः सर्ववेदतात्पर्यविषयीभूतं सर्वथैवोपहतं स्यादिति निर्विशेष*ब्रह्मभिन्नत्वस्य जगन्मिथ्यात्वव्याप्यत्वविरहेण मिथ्यात्वाभावसाध्यकानुमितौ ब्रह्मभिन्नत्वादेरुपाधित्वेनोद्भावनमनभिज्ञानां निजमतिमान्द्यनिबन्धनं शिष्यसंमोहनमात्रम् । श्रुत्युपष्टम्भस्य तु यथाऽद्वैते न संभवस्तथा निपुणतरमुपपादयिष्यामः स्वावसरे ।

न चैतादृशगुणत्वस्याकल्पितत्वे भवेदेतदेवं तदेव तु पुनरसिद्धं ब्रह्मणो निर्विशेषस्य सर्वविशेषप्रत्यनीकतया निरुक्तगुणयोगितायाः कल्पनैकशरीरत्वेन ततो जगत्सत्यत्वाभिधानानुपपत्तेरिति वाच्यम् । गुणयोगित्वकल्पनाया वक्ष्यमाणदूषणग्रस्ततया तथाऽभिधानासङ्गतेः । तथा हि वादिना मायावेषवशंवदस्य परस्येशितुर्गुणयोगो मायिकोवक्तव्यस्तेनैव च जन्म कर्म च मे दिव्यमेवं योवेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ इत्यादिर्भगवतोऽपि निजव्यवहारो निर्वहणीयः ।

एवं च ब्रह्माज्ञानं जीवानामिव भगवतोऽपि समानमिति तदीयजन्मकर्मणां तात्त्विकत्वज्ञानस्य सुदूरनिरस्तं मोक्षहेतुत्वमिति साधु तें मोक्षमार्गव्यवस्थापनं, यदि त्वीश्वरस्य नाज्ञानं जीवानामिव परं तु मायायोग एवं च परव्यामोहहेतुर्माया स्वव्यामोहहेतुरविद्येति प्रविभागान्नाक्षेपगन्धोऽपि भगवदैश्वर्ये इति ब्रूषे तर्हि परान् निरीक्षमाणस्य भगवतस्तद्व्यामोहनमुतानिरीक्षमाणस्येति वाच्यं तत्र नाद्यः पक्षो यतो ब्रह्मणः परदर्शनं स्वाभाविकमुताज्ञानेन । अथ तयैव माययेति विवेचनीयम् । तत्र परदर्शनस्य

* अनन्तकल्याणगुणसागरस्य नैर्गुण्याभिधानमपि वादिमततात्पर्येण न तु सिद्धान्त्यभिप्रायेणेत्यवधेयम् ।

स्वाभाविकत्वे दोषाजन्यज्ञानविषयत्वात्परेषां सत्यत्वप्रसङ्गः । ब्रह्मणि ज्ञातृत्वस्य स्वाभाविकत्वप्रसङ्गश्च । अज्ञानेन परदर्शनाङ्गीकारे तु ब्रह्माज्ञानवादावतारः । मायाऽभ्युपगमवैयर्थ्यं च अज्ञानस्यैव सर्वव्यवहारनिर्वहणकारणत्वात् । तयैव मायया परदर्शनमिति तृतीयकल्पोऽपि न युज्यते परेषु दृष्टेषु तन्मोहनमात्रहेतुत्वान्मायायाः परद*र्शनहेतुत्वायोगात् । यदि तु मायायाः परदर्शन—तद्व्यामोहनयोर्हेतुत्वं धर्मिग्राहकमानसिद्धमिति न कश्चिद्दोष इत्युच्यते तदा परेष्वविद्यमानेषु माया परदर्शनहेतुरिति तस्या आंशिकमविद्यात्वं विपरीतज्ञानहेतुत्वात् । यदि तु शुक्तिकादिषु रजतादिबुद्धिहेतुरविद्या माया तु ब्रह्मणो न विपरीतज्ञानं जनयति मिथ्याभूतपरदर्शनादेर्मिथ्यात्वेनैव ग्रहणात् । भ्रान्तिज्ञो हि विशेषदर्शी न तु भ्रान्तः । एवं च मिथ्याभूतं ब्रह्मव्यतिरिक्तं मिथ्यात्वेनैव बोधयन्ती माया नाविद्येति न मायाऽविद्यासांकर्यशङ्काऽपीति विवक्षसि ।

तदा कृतावधानो वद किमेतन्मिथ्याभूतं ब्रह्मव्यतिरिक्तं स्वभ्रमसिद्धतया मिथ्यात्वेनेश्वरोजानाति उत परभ्रमसिद्धतया । अथ भ्रमसिद्धत्वमजानन्नपि मिथ्यात्वमात्रं जानातीति तत्र प्रथमे ब्रह्माज्ञानवादप्रसङ्गः ।

द्वितीयपक्षे तु परेषामसिद्ध्या परभ्रमसिद्धत्वाभिधानानुपपत्तिः । परान् प्रकल्प्य परभ्रमसिद्धत्वसमर्थने तु असतां परेषां कल्पना अविद्ययेव निर्वहणीयेत्यविद्याङ्गीकारः । न ह्यसतां परेषां दर्शनहेतुर्नाविद्येति वक्तुं प्रभवसि ।

---

* परासत्त्वे परदर्शनहेतुरविद्येति तात्पर्यम् ।

यदि तु परानपि परभ्रमसिद्धतया ब्रह्म पश्यतीति नाज्ञानवादावतार इत्युत्प्रेक्षसे तदा निरुक्तरीत्या अपरापरकल्पनेऽनवस्थाप्रसङ्गः, कल्पितानां तेषां परेषामेव भ्रमेण तत्सिद्धत्वदर्शनेऽपि तथाविधविशिष्टद्रष्टुरविद्याऽपेक्षणेन भ्रान्तिरवर्जनीयैव । यथा वन्ध्यासुत इति भ्रमसिद्धो वन्ध्यासुत इति ज्ञाने विशिष्टद्रष्टुरपि भ्रमसिद्धिः । भ्रमसिद्धत्वमजानन्नपि मिथ्यात्वमात्रं जानातीति तृतीयपक्षोऽपि न युक्तः । भ्रमसिद्धत्वाज्ञाने मिथ्यात्वस्य दुर्ग्रहत्वात् । न ह्यसत्त्वं मिथ्यात्वं तस्यालीकेऽपि सत्त्वात् । किन्तु स्वात्यन्ताभावसमानाधिकरणतया प्रतीयमानत्वादिरूपं तदिति भवतां सिद्धान्तः ।

परेषां मिथ्यात्वज्ञाने च ब्रह्मणस्तद्व्यामोहनेच्छा विसंवादिन्येव स्यान्न हि परे न विद्यन्ते इति जानानाः पटुकरणाःपरव्यामोहनाय प्रयतन्ते । यतमाना वा भ्रान्ता इति प्रतिपत्तिविषयाः । न हि प्रेक्षावन्तः खपुष्पमाघ्रातुं वन्ध्यासुतं लालयितुं वा चेष्टन्ते इति तथा कुर्वाण ईश्वरोऽविद्यावत्त्वं नातिवर्तते इति घट्टकुटीप्रभातवृत्तान्तायितमिदमभिधानम् ।

परानिरीक्षमाणस्य भगवतस्तद्व्यामोहनप्रयत्नपक्षस्तु उन्मत्तजल्पनायित एव परानिरीक्षमाणानां मायाविनां मोहप्रयत्नाननुष्ठानात् । परानसंप्रेक्ष्य मोहयितुमिच्छन् स्वयमेव मूढ इति सार्वजनीनमेतदिति किं बहुना । नापि मोहमात्रहेतौ मायाविपदप्रयोगस्तथा सति मोहहेतुषु मणिमन्त्रेषु दिव्यौषधेषु च मायाविपदप्रयोगप्रसङ्गात् ।

अथ परव्यामोहनप्रयत्नस्य परदर्शनपूर्वकत्वमावश्यकं तच्चासत्सु परेषु परदर्शनं द्रष्टुरविद्यावत्त्वं नातिशेत इति प्राप्नोति तथा-

पीश्वरस्य परदर्शनं नापुरुषार्थाय यथा जीवानामिति न तदविद्याकार्यम् । अपरमार्थापुरुषार्थदर्शनहेतोरेवाविद्याकार्यत्वाभ्युपगमात् । ईश्वरस्तु बालः क्रीडनकैरिवेति भारतोक्तदिशा लोकवत्तु लीलाकैवल्यमिति ब्रह्मसूत्रोक्तन्यायेन स्वकल्पितैस्तैर्भृशं यथेच्छं व्यवहरन्नपि नापुरुषार्थगन्धेनाप्यनुलिप्यते इति न कथमप्यवद्यगन्धसंबन्धोऽपीति चेन्न ।

पुरुषार्थत्वापुरुषार्थत्वे हि पुरुषप्रतिभानतन्त्रे न तु वस्तुतन्त्रे यदेव हि कस्मैचित्कदाचित्पुरुषार्थतयाऽवगतं तदेव पुरुषान्तरं प्रति तं पुरुषं प्रत्येव वा समयान्तरे अयथाभूततयाऽवगम्यते इत्यपुरुषार्थापरमार्थदर्शनहेतुरविद्येति लक्षणस्यापुरुषार्थपदेन जिघृक्षिताऽपुरुषार्थता नैकरूपेति तस्यास्तत्पुरुषीयभाननैयत्याद् ब्रह्मणः पुरुषार्थत्वभानं ब्रह्मस्वरूपविश्रान्तं वा औपाधिकं वा वक्तव्यं तत्र स्वरूपविश्रान्तत्वे सविशेषत्वप्रसङ्गः । औपाधिकत्वे तु ईश्वरमुपक्रम्य पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति ज्ञानादेः स्वाभाविकतां ब्रुवाणा श्रुतिर्भगवती पीड्येत । पीड्येत च एनामेव श्रुतिमुपबृंहमाणं सर्वोपेता* च तद्दर्शनादिति ब्रह्मसूत्रम् । अपराणि च स्वाभाविकभगवद्वैभवप्रतिपादकवचनजातानि । गीता तु स्वाभाविकनिरतिशयैश्वर्यप्रतिपादनपरा सर्वथैवोत्सादिता भवतीति किमु वक्तव्यम् । तस्माद् भगवतो गुणयोगो न भगवत्कल्पितो नापि जीवैः कल्पितः किन्तु वस्तुतत्त्वानतिलङ्घी यथाभूत एवेति भगवद्गुणयोगस्य कल्पनैकशरीरत्व†मुपकल्प्य ततो जगन्मिथ्या-

---

* परा देवता ब्रह्मरूपा सर्वाश्चर्यशक्तिसमन्विता उपनिषत्सु तथा दर्शनात् सर्वाश्चर्यशक्तियुक्तत्वप्रतिपादनात् ।

† अत्रत्यो विशेषस्तु मायाऽविद्याभेदभङ्गवादे वक्ष्यते ।

त्वानुमानप्रयत्नोऽमीषामतर्ककुशलानां शिष्यधीव्यामिश्रणामात्रफलक इत्यकिञ्चिदिदं दृश्यत्वहेतुकमिथ्यात्वानुमानसमर्थनपरं वाचोयुक्तिमात्रमिति कृतं वाचां विसर्गैः ॥

एवं जडत्वहेतुकस्थलेऽपि दोषजन्यत्व—ज्ञानबाध्यत्वादय उपाधय ऊहनीयाः । किंच जडत्वमात्मभिन्नत्वरूपं ज्ञानभिन्नत्वरूपं वा आनन्दभिन्नत्वरूपमेव वा वक्तव्यं तत्र सर्वेष्वपि पक्षेषु कल्पितात्मादिभेदस्यात्मन्यपि सत्त्वात्तद्दोषवारणाय धर्मिसमानसत्ताकात्मभेदस्य अनौपाधिकात्मभेदस्य वा विवक्षणमिति वादिसिद्धान्तः । एवं च घटादावात्मभेदस्य धर्मिसमसत्ताकतया आत्मनि कल्पितस्य तु भेदस्य धर्मिन्यूनसत्ताकतकया औपाधिकतया वा न तेन व्यभिचारसंभव इति वादितात्पर्यम् । अत्रैवमालोचयामः—मिथ्यात्वे हेतूकृतं जडत्वं धर्मिसमसत्ताकात्मभिन्नत्वम् । एवं च मिथ्यात्वानुमितेः प्रागेव आत्मातिरिक्तस्य काल्पनिकसत्तायोगाङ्गीकारः । काल्पनिकत्वं च मिथ्यात्वमेव । ततश्च मिथ्यात्वानुमितेर्मिथ्यात्वसिद्धिपूर्वकत्वमिति कथं जडत्वहेतुकमिथ्यात्वानुमानसंभवः ।

यदि नानुमितेरनवगतार्थावगमकत्वनियम इत्यनुमित्सया मिथ्यात्वानुमानप्रवृत्तिरिति ब्रूषे वद तर्हि कथं प्रमातुमुद्युङ्क्षे मिथ्यात्वमिति यथा नानुमित्या मिथ्यात्वसिद्धिस्तथा प्रमाणान्तरेणापीति स्वावसरे निरूपयिष्यामः । तस्माज्जडत्वहेतुकमिथ्यात्वानुमानमपि बालोपलालनामात्रम् ॥

एवं मिथ्यात्वे साध्ये हेतूकृतं परिच्छिन्नत्वं देशतः कालतो वस्तुतश्चेति त्रेधाऽभिधेयं तत्र देशतः परिच्छिन्नत्वमत्यन्ताभावप्रतियोगित्वम् । कालतः परिच्छिन्नत्वं ध्वंसप्रतियोगित्वम् ।

वस्तुतः परिच्छिन्नत्वमन्योन्याभावप्रतियोगित्वं वाच्यं तदेवं परिच्छेदत्रयमश्नुवानस्य घटादेर्मिथ्यात्वं किं घटानवच्छेदककालदेशावच्छेदेन विद्यमानात्यन्ताभावप्रतियोगित्वं वा तदवच्छेदकदेशावच्छेदेन विद्यमानात्यन्ताभावप्रतियोगित्वं वा आद्ये सिद्धसाधनं द्वितीये तु प्रतियोगितदभावयोर्विरोधादेव घटवति न तदत्यन्ताभावः ।

यदि पुनः पारमार्थिकत्वरूपेण घटवति तदत्यन्ताभावाभ्युपगम इति न विरोधगन्धोऽपीति ब्रूषे तदा घटात्यन्ताभावस्य पारमार्थिकत्वं घटमनुपमृद्यैव लब्धंपदमथ घटमुपमृद्येति विचारणीयं तत्राद्ये द्वैततादवस्थ्यं घटात्यन्ताभावे लब्धपदेऽपि चेद् घटस्तदवस्थस्तर्हि किं तेनास्मदभिमतार्थहानम् । घटमुपमृद्य लब्धपदमिति पक्षे तु तस्य कीदृशी उपमर्दकतेति वदावधानेन । घटात्यन्ताभावस्य पारमार्थिकस्य ब्रह्मरूपतया ब्रह्मणः सर्वाधिष्ठानत्वेनाधिष्ठानज्ञानमुद्रया तस्याध्यस्तविलयहेतुत्वेन घटोपमर्दकतेति न कश्चिच्चोद्यावतार इति चेत्तर्हीदं शिष्यव्यामोहनमन्त्रमात्रम् । घटादीनामध्यस्तत्वेन मिथ्या*त्वं मिथ्यात्वेन चाध्यस्तत्वसमर्थनमित्यन्योन्याश्रयात् । किंचाधिष्ठानज्ञानं स्वयमप्यध्यस्तमिति तदपि पुनरुपमर्दनीयं न च तदुपमर्दकं भवता किमपि वक्तुं शक्यं न च स्वयमेवोपमृद्यमुपमर्दकं चेति युज्यते इति त्वसकृदावेदितम् ।

एवं कालतः परिच्छेदोऽपि न मिथ्यात्वसाधकस्तस्यानित्यत्वमात्रसाधकत्वात् । न हि ध्वंसमानो घटादिर्न घटादिः । ध्वंसो हि भावानामवस्थाविशेषः स कथमप्यवस्थावतां न मिथ्यात्वमावहति कदाचिद् घटादिर्भावो भविष्यदवस्थः । स एव पुनर्व-

---

* भ्रमोपादानाज्ञानविषयस्य ह्यधिष्ठानत्वमिति ज्ञानस्य भ्रमत्वेन विषयस्य मिथ्यात्वं विषयस्य मिथ्यात्वेन च ज्ञानस्य भ्रमत्वमिति भावः ।

र्तमानदशः । स एव पुनरतीत इत्यवस्थात्रययोगितया किं मिथ्या स्यात् । न ह्यवस्थावतो विरहेऽवस्था लब्धपदा । यदि त्वनित्यतयैव मिथ्येति व्यवहरसि तर्हि ओमिति ब्रूमः । न च तावता त्वदभिमतसिद्धिसंभवोऽपि ।

एवं वस्तुपरिच्छेदोऽपि न मिथ्यात्वसाधकः । वस्तुपरिच्छेदो हि नाम अन्योन्याभावप्रतियोगित्वं न च तन्मिथ्यात्वमावहेत् । घटो हि पटो न भवन्नपि नात्मना घटभावमपि जह्यात् । यथा हि पटस्य घटभावमनश्नुवानस्य पटभाव एवं घटस्यापि । न हि भावाः परतादात्म्यं न लभन्ते इति स्वात्मानमपि जह्युरिति अनुन्मत्तः शङ्कतापि । न ह्येकत्र सतो देशान्तरासत्त्वापराधमात्रेण बाधोयुक्तः । न हि नीरे न चैव इति तीरेऽपि तस्य बाधमाद्रियन्ते विज्ञाः । एवं कदाचित्सतः कथं चित् कदाचिदसत्त्वेन सर्वथैवासत्त्ववादोऽप्यनभिज्ञजनकल्पनैव । एवं वस्त्वन्तरतादात्म्यमभजमानस्य स्वतादात्म्यच्यवोऽप्यज्ञजनाज्ञानविजृम्भित एव न ह्यश्वो न गज इत्यनश्वताऽपि तस्य प्राज्ञैरापाद्यते तस्मात् कालतो देशतो वस्तुतश्च परिच्छेदः कथमपि मिथ्यात्वं नार्जयतीति परिच्छिन्नत्वेन मिथ्यात्वानुमानमयुक्तिमूलमिति मनीषिणां मतम् ।

किंच परिच्छेदत्रयस्य हेतुत्वे एकैकस्य परिच्छेदस्य त्वदुक्तरीत्या मिथ्यात्वसाधकत्वसम्भवे त्रयस्य तस्य हेतुत्वे व्याप्यत्वासिद्धिः । यथा पृथिव्यामितरभेदसाधने द्विविधगन्धवत्त्वस्य । यदि त्वेकैकपरिच्छेदस्य साधकतामभिप्रैषि तर्हि देशकृतवस्तुकृतपरिच्छेदस्यालीकेऽपि सत्त्वात्तस्यापि मिथ्यात्वापत्तिः । न ह्यलीकं मिथ्येति तवापि सिद्धान्तः । अस्ति चालीकेऽप्यन्योन्याभावप्रतियोगित्वमन्यथाऽलीकघटयोरैक्यमेव प्रसज्येत । यदि त्वलीके व्यभिचारंपरि-

ह्याराय सत्त्वे सत्यन्योन्याभावप्रतियोगित्वमुच्यते तदाऽप्यप्रयोजकत्वम् । न हि सत्त्वे सत्यन्योन्याभावप्रतियोगीत्येव कल्पित इत्यावयोरुभयोः क्वचिदप्यविप्रतिपन्नमस्ति । येन तस्य मिथ्यात्वप्रयोजकत्वं ब्रूयाः । अस्ति च परिच्छिन्नत्वहेतुकस्थले दृश्यत्वजडत्वहेतुकस्थल इव ज्ञानबाध्यत्व—दोषजन्यत्व—विसंवादिप्रवृत्तिजनकत्वादिरूपोपाधिग्रस्तत्वमपि । तस्मात्परिच्छिन्नत्वहेतुकमिथ्यात्वानुमानं सर्वथाऽप्याभास इति किं विज्ञेषु बहुना जल्पितेन ॥

यान्यपि* परैर्विश्वमिथ्यात्वसाधकत्वेन विशेषतोऽनुमानान्युपन्यस्यन्ते तानि अबहुश्रुतानां बुद्धिसंग्रहाय महता प्रबन्धेनोपपाद्य परीक्षयाऽऽभासीक्रियन्ते । तत्र ब्रह्मज्ञानेतराबाध्यब्रह्मान्यासत्त्वानधिकरणत्वं पारमार्थिकसत्त्वाधिकरणावृत्ति । ब्रह्मावृत्तित्वात् । शुक्तिरूप्यत्ववत्परमार्थसद्भेदवच्च ।

विमतं मिथ्या ब्रह्मान्यत्वात् । शुक्तिरूप्यवदित्यनुमानयुगलम् । तत्र प्रथमे ब्रह्मज्ञानान्याबाध्यं यद् ब्रह्मान्यत् तद्वृत्तित्वविशिष्टोऽसत्त्वाभाव इत्यर्थः । तत्र ब्रह्मान्यस्मिन् अबाध्यान्तानभिधाने ब्रह्मान्यासत्त्वानधिकरणे शुक्तिरूप्ये पारमार्थिकसत्त्वाधिकरणावृत्तितायाः परस्याप्यङ्गीकृतत्वात्सिद्धसाधनवारणायाबाध्यान्तं, ब्रह्मज्ञानेतरज्ञानाबाध्यसत्त्वानधिकरणत्वमात्रोक्तौ च ब्रह्मण्यपि पक्षत्वाक्रान्ततायाः सत्त्वेन साध्यीभूतायाः पारमार्थिकसत्त्वाधिकरणावृत्तितायाश्चासत्त्वेन बाधवारणाय ब्रह्मान्यत्वानुसरणं, तावन्मात्रोक्तौ च ब्रह्मज्ञानेतरज्ञानाबाध्ये ब्रह्मान्यस्मिन्नलीके पारमार्थिकसत्त्वाधिकरणावृत्तितायाः सिद्धतया सिद्धसाधनवारणायासत्त्वा-

* मधुसूदन-चित्सुखाचार्यप्रभृतिभिः ।

नधिकरणत्वान्तम् । अत्र पारमार्थिकसत्त्वाधिकरणावृत्तित्वं व्यावहारिकमुपादेयम् ।

हेतुतावच्छेदककुचावृत्तित्वमात्रोक्तौ तस्य दृष्टान्तावृत्तितया व्याप्तिग्राहकत्वासंभव इति ब्रह्मावृत्तित्वानुधावनम् । न चावृत्तित्वमात्रस्यापि निर्विशेषब्रह्मनिष्ठत्वेन व्याप्तिग्रहणसंभवे व्यर्थविशेषणघटितत्वेन व्याप्यत्वासिद्धिरिति शङ्कनीयम् । परैरपि सत्त्वरूपत्वेन ब्रह्मणः प्रपञ्चवृत्तित्वाङ्गीकारेण पारमार्थिकसत्त्वाधिकरणतया ब्रह्मणि दृष्टान्ते साध्यवैकल्यप्रसङ्गात् । किंच मिथ्यात्वानुमितेः पूर्वं ब्रह्मनिष्ठस्य प्रपञ्चवृत्तित्वस्यासिद्ध्या सामान्यतोऽवृत्तित्वं ब्रह्मण्यसिद्धमिति ब्रह्मावृत्तित्वानुधावनम् । यद्यपि शुक्तिरूप्यत्वमपि शुक्त्यवच्छिन्नचिद्वृत्तीति ब्रह्मवृत्तित्वं तस्य तथाऽपि शुद्धब्रह्मावृत्तित्वमिह विवक्षितं न च शुक्तिरूप्यत्वं शुद्धब्रह्मवृत्तीति सर्वमवदातमिति प्रथमानुमाने वादिनां तात्पर्यविशुद्धिः । अत्रैवं ब्रूमहे ब्रह्मज्ञानस्याबाधकतायाः पूर्वं सुव्यवस्थापितत्वेन ब्रह्मज्ञानबाध्यत्वदुर्वासनयोपात्तस्य ब्रह्मज्ञानेतराबाध्यान्तभागस्य पक्षतावच्छेदककुक्षौ वैयर्थ्यात्परमते पक्षविशेषणासिद्धिः । किंचेह प्रातिभासिकत्वमुपाधिः । यत्रयत्र साध्यनिश्चयः शुक्तिरूप्यत्वादौ तत्रतत्र प्रातिभासिकत्वसत्त्वात् । ब्रह्मावृत्तित्वस्य च ब्रह्मण्यपि सत्त्वात्तत्र च प्रातिभासिकत्वासत्त्वात्साधनाव्यापकतया भवति प्रातिभासिकत्वस्योपाधित्वम् । न च प्रातिभासिकत्वस्य ब्रह्मज्ञानेतरज्ञानबाध्यत्वरूपतया तस्योपाधित्वे उपाध्यभावमुद्रया ब्रह्मज्ञानेतरज्ञानबाध्यत्वाभावस्यैव साध्याभावानुमापकता वाच्या ततश्च तद्घटकस्य ज्ञानबाध्यत्वाभावस्यैव हेतुत्वसंभवेऽधिकस्य वैयर्थ्याद् व्याप्यत्वासिद्धत्वमिति वाच्यम् । यतो ब्रह्मज्ञानस्याबाधकतया ज्ञानबाध्यत्वस्यैव

प्रातिभासिकत्वरूपतया तदभावस्यैव चोपाध्यभावमुद्रया साध्याभावानुमापकतया क्षतिविरह इति दृश्यत्वहेतुकानुमानभङ्गे समगरिष्महि । एवं प्रतिभासशरीरत्वमप्युपाधिः । दृष्टिसृष्टिपक्षे प्रतिभासशरीरत्वस्य साधनव्यापकतयाऽनुपाधित्वसमर्थनं तु पूर्वमेवास्माभिरपाकृतमपाकरिष्यते चाग्रे दृष्टिसृष्टिपक्षप्रतिक्षेपावसरे इति तत्रैव द्रष्टव्यम् । एवं दोषजन्यवृत्तित्वं विसंवादिप्रवृत्तिजनकवृत्तित्वमित्येवमाद्युपाधियोगादपि दूषणीयमिदमनुमानम् ।

एवं घटः परमार्थसन् ब्रह्मज्ञाना*नाबाध्यत्वाद् ब्रह्मवत् । घटः परमार्थसन्न†कल्पितत्वाद् ब्रह्मवत् । घटादीनां पारस्परिकोभेदो ब्रह्मावधिकश्च भेदः पारमार्थिकः स्वपरनिर्वाहकत्वाद् ब्रह्मवत् इत्याद्यनुमानेन सत्प्रतिपक्षितत्वमपि ॥

ननु घटादीनां प्रत्येकसत्त्वाङ्गीकारे सदंशे प्रतीत्यननुगमः । सर्वसाधारणैकसत्त्वाङ्गीकारे तु घटादीनां प्रातिस्विकसत्त्वनिवृत्त्या परकीयसत्त्वेन सत्तावत्त्वात्स्वयमसत्त्वमिति तु निर्विशेषसन्मात्रस्वरूपब्रह्माभ्युपगमभ्रममात्रनिबन्धनमाशङ्कनम् । यथा हि चिन्मात्रस्वरूपस्य ब्रह्मणः सत्त्वं भवताऽभ्युपेतमिति तदतिरिक्तस्य सर्वस्यासत्त्वं निर्विशेषत्वं च ब्रह्मणस्तथा समस्तचिदचिच्छरीरकस्य नैसर्गिकसर्वाश्चर्यधाम्नो ब्रह्मणः सत्त्वं वैदिकैरङ्गीक्रियत इति ब्रह्मण इव जगतोऽपि सत्त्वं न च निर्विशेषं ब्रह्मेति नानुभवविरोधगन्धोऽपि तथा हि प्रतिजानीते भगवती श्रुतिः—पराऽस्य शक्ति-

---

* ब्रह्मज्ञानाबाध्यत्वं च घटादेः पूर्वमेव समार्तथम् ।

† अकल्पितत्वस्य कल्पनाऽसमानकालीनसत्तायोगित्वरूपत्वेन घटादीनामज्ञातसत्तासमर्थनावसरे भवतैवाद्वैतसिद्धौ निरूपितत्वादकल्पितत्वं नासिद्धमिति सिद्धान्तिनो निरूढभणितम् ।

विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति । अनुभूते चामुमे-वार्थं सर्वोपेता च तद्दर्शनादिति ब्रह्मसूत्रमिति पूर्वमेवाब्रूमहि ।

एतेन " ननु भवन्मते यत्सत्त्वं ब्रह्मणि तदेवेह मम । उक्तं हि यादृशं ब्रह्मणः सत्त्वं तादृशं स्याज्जगत्यपि । तच्च स्यात्तदनिर्वाच्यं चेदिहापि तथास्तु नः ॥ इति । न च तत्रापरिच्छिन्नत्वं सत्त्वं तच्च न जगतीति वाच्यं तुच्छस्यापरिच्छिन्नत्वेऽपि सत्त्वानभ्युपगमान्नापरि-च्छिन्नत्वं सत्त्वं किं त्वन्यदेव । तच्च ब्रह्मणीव भ्रमाधिष्ठानत्वाच्छु-क्तिकारजतादेरपि स्यादिति चेत्--नूनं विवाहसमये कन्यायाः पित्रा निजगोत्रं पृष्टस्य यदेव भवतां गोत्रं तदेव ममापि गोत्रमिति वदतो वरस्य भ्राता भवान् । यतो जामातृश्वशुरयोरेकगोत्रत्वे विवाहानुपपत्तिवत् जगद्ब्रह्मणोरेकसत्त्वे जगतोऽसत्त्वमेव स्यात् । तथा हि स्वप्रकाशाद्वितीयचैतन्यरूपत्वमेव ब्रह्मणः सत्त्वं तदेव जडस्यापि जगतस्तदा रजतत्वविरोधिशुक्तिसत्तया रजतस्येव जडत्वविरोधिस्वप्रकाशसत्तया जगतः स्वरूपतो मिथ्यात्वोपपत्तेः । चैतन्यस्यैवावच्छिन्नानवच्छिन्नाज्ञानविषयत्वेन सर्वभ्रमाधिष्ठानत्वा-भ्युपगमात् । न भ्रमाधिष्ठानत्वेन शुक्त्यादेः सत्त्वसिद्धि"रित्यद्वैत-सिद्धिकृतामभिधानं निरस्तम् ॥ चिदचिच्छरीरके ब्रह्मणि सत्त्वसिद्धौ विशेष्यस्य ब्रह्मण इव विशेषणयोश्चिदचितोरपि सत्त्वसिद्धेरवर्जनी-यत्वात् । जगद्ब्रह्मणोरेकसत्त्वे जगदसत्त्वं तु तदा स्याद् यदि स्वप्र-काशाद्वयचैतन्यरूपत्वं ब्रह्मणः सत्त्वमभ्युपगच्छेम । सविशेषब्रह्मवा-दसिद्धान्ते हि ब्रह्मणोऽनन्तकल्याणगुणाकरतया केचन धर्मा ब्रह्म-णोऽसाधारणाः । यथा जगद्व्यापारादयः । यथाह भगवान् कृष्ण-द्वैपायनो ब्रह्मसूत्रेषु जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च । केचित्तु जीवसाधारणा यथा मोक्षे इष्टभोगादयः । यथोक्तं ब्रह्मसूत्रेष्वेव भो-

गमाचसाम्यलिङ्गाच्चेति । केचित्पुनर्जडजीवसाधारणा यथा स*त्त्वादयः । तस्माज्जगद्ब्रह्मणोरेकसत्त्वे जगतोऽसत्त्वसमर्थनं जगन्मिथ्यात्ववाददुर्वासनासमुत्थं न तु युक्तिश्रुतिसूत्रसमुद्भासितमिति वैदिकः† पन्थाः ।

अथैवमवदधीमहि ब्रह्मावृत्तित्वेन भवदभिमतशबलब्रह्मावृत्तित्वं विवक्ष्यते ! उत परब्रह्मावृत्तित्वं तत्र प्रथमे शबलस्य कारणत्वे तदवृत्तित्वमसंभवि कार्यमात्रस्य कारणानुगमश्रवणात् । यथाह भगवान् पराशरः । विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् । स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः ॥ इति, शबलस्याकारणत्वे तु ब्रह्मावृत्तित्वमप्रयोजकं घटावृत्तित्वस्येव तस्यापि तत्रोदासीन्यात् । किंच अवृत्तित्वमात्रस्यैव हेतुत्वे संभवति ब्रह्मावृत्तित्वं व्याप्यत्वासिद्धमपि । न चावृत्तित्वमात्रस्य दृष्टान्तावृत्तित्वेन व्याप्यग्राहकत्वाद् ब्रह्मावृत्तित्वानुधावनसाफल्यमिति वाच्यम् । कार्यमात्रस्य कल्पितत्वमङ्गीकुर्वतां कारणासङ्गितया शुक्तिरूप्य—तद्धर्माणां सर्वेषामवृत्तिताया एव युक्तत्वेन अवृत्तित्वस्य दृष्टान्तावृत्तित्वाभावात् न हि शुक्तिरूप्य—तद्धर्मयोरप्याधाराधेयभावो भवता वास्तवोऽभ्युपेयते यच्छुक्तिरूप्यत्वं तद्वृत्ति स्यात् । कार्यकारणभावस्य वास्तविकत्वे तु ब्रह्मणः कारणत्वेन तदवृत्तिताया वक्तुमशक्यत्वादसिद्धिरेव । यथाह भगवानेव गीतासु स्वयं—मयि सर्वमहं सर्वं मत्तः सर्वं प्रवर्तते । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । इति, । परे ब्रह्मवृत्तिताया विश्वस्मिन्नेवाङ्गीकृतत्वेन पक्षत्वेनाभिमते ब्रह्मावृ-

* इदमत्राकूतम्—अधिकं तु भेदनिर्देशादित्यादिना ब्रह्मसूत्रेषु ब्रह्मणः पार्थक्येनावधारितं जीवस्वरूपं ततश्च जडभेदस्य जीवेश्वरसाधारण्यात् त्रयाणामप्यमीषां पृथगवस्थाने त्रिष्वपि सत्त्वं सिद्धमिति सत्त्वं तत्त्रितयसाधारणोधर्म । इति युक्तम् ।

† जगन्मिथ्यात्ववादस्तु माध्यमिकैकदेशिनामेव युक्त इति वैदिकपदप्रयोजनव्यञ्जनम् ।

त्तित्वमन्यतरासिद्धमपि । सर्वतान्त्रिकैः स्वस्मिन् स्ववृत्तिया अनङ्गीकारेण ब्रह्मावृत्तित्वस्य ब्रह्मणि सत्त्वेन तत्र च पारमार्थिकसत्त्वाधिकरणावृत्तित्वा*नधिकरणत्वेन हेतोर्व्यभिचारित्वमपि ।

ब्रह्मावृत्तित्वेन परब्रह्मावृत्तित्वविवक्षापक्षे तु परब्रह्मणः सर्वासङ्गित्वेन परब्रह्मनिरूपित†वृत्तित्वाप्रसिद्ध्या तन्निरूपितवृत्तित्वाभावोऽप्यप्रसिद्ध इति हेत्वसिद्धिः । अलीकप्रतियोगिकाभावाभ्युपगमेऽपि च स्वस्मिन् स्ववृत्तित्वासत्त्वेन हेतोर्ब्रह्मणि सत्त्वेऽपि साध्यासत्त्वेन प्रथमकल्पोक्तदिशा व्यभिचारोऽपि । शुक्तिरूप्यत्वादेरपि शुद्धब्रह्माध्यस्तत्वपक्षे दृष्टान्तावच्छेदेन साधनवैकल्यमपि । यदि तु ब्रह्मावृत्तित्वपदेन शुद्धब्रह्मनिरूपितं यत्काल्पनिकवृत्तित्वं तस्य पारमार्थिकत्वरूपेणाभावविवक्षणं तदा काल्पनिकस्य तस्यापि ब्रह्मणि सत्त्वेन व्यभिचारो दुष्परिहर एव । यदि पुनः पारमार्थिकब्रह्मावृत्तित्वं विवक्ष्यते तदाऽप्रसिद्धिरेव ब्रह्मातिरिक्तस्य पारमार्थिकत्वानङ्गीकारात् । ब्रह्मावृत्तित्वस्य कथञ्चिद् ब्रह्मरूपत्वे तु तस्य दृष्टान्तेऽसत्त्वेन साधनवैकल्यं ब्रह्मरूपस्य तस्य घटादावसत्त्वेन स्वरूपासिद्धिश्च । तस्माद् ब्रह्मावृत्तित्वहेतुना पारमार्थिकसत्त्वाधिकरणावृत्तित्वसाधनोद्यमः केषांचिदमीषां स्वचक्षुःस्फोटनेन परचक्षुःप्रणाशोद्यमायित एवेति कृतधियः ।

उपहितवृत्तेः शुद्धवृत्तित्वनियमनये शुक्तिरूप्यत्वस्य ब्रह्मावृत्तित्वासंभवेन परमार्थसद्भेदवदिति दृष्टान्तान्तरानुसरणं प्रथमा-

* अयं भावः—यथा सत्त्वानधिकरणे सन्मात्रस्वरूपेऽपि ब्रह्मणि सत्त्वाधिकरणत्वं काल्पनिकमङ्गीकरोषि तथा पारमार्थिकसत्त्वाधिकरणवृत्तित्वमपि तत्र काल्पनिकमङ्गीकृतं चेत्तर्हि व्यभिचार इति ध्येयम् ।

† निर्विशेषब्रह्मवादित्वात्तवेति तात्पर्यम् ।

नुमाने । परमार्थसद्भेदस्य च परमार्थसति ब्रह्मण्यविद्यमानत्वाद्धेतुसत्त्वं तच्चेत्यद्वैतसिद्धिकृतां तात्पर्यम् ।

अत्रैवमालोचयामः—घटादीनां परमार्थसद्भिन्नत्वमप्रसाध्य परमार्थसद्भेदवदिति दृष्टान्तोऽसिद्धः परमार्थसतां घटादीनां भेदस्य ब्रह्मवृत्तित्वात् । यदि तु घटादीनां परमार्थसद्भिन्नत्वं सिद्धवदवधार्य प्रवृत्तोऽसि तदा तदेव तेषां मिथ्यात्वमिति कृतं मिथ्यात्वानुमानमहाडम्बरेण । तस्माद् यावत्कालं घटादिषु परमार्थसद्भिन्नत्वं न प्रमाणेनावधारितं तावत् परमार्थसतां घटादीनां भेदस्य ब्रह्मवृत्तितया व्याप्तिग्रह एवेति कथं तस्य दृष्टान्तता । न ह्यनुमानं लोकानधिगतं* वाद्यननुमतमर्थमादाय प्रभवति । इतरथा तु यत्किंचिदेव स्वमनसा लोकानवधृतं वाद्यनङ्गीकृतमर्थं दृष्टान्तीकृत्य विचारे कथोपप्लव एव स्यादिति कीदृशमिदमद्वैतसिद्धिकृतां दृष्टान्ताभिधानमिति सचेतसः सर्वे एव साक्षिण इति किं ब्रूमः ।

यदि तु वादिनः परमार्थसत्त्वेनाभिमतानामपि घटादीनां भेदो ब्रह्मण्यङ्गीक्रियमाणो न परमार्थसत्त्वावच्छिन्नप्रतियोगिताकस्तेषामपि परमार्थसत्त्वात् किन्तु घटत्वाद्यवच्छिन्नप्रतियोगिताक इति परमार्थसत्त्वावच्छिन्नप्रतियोगिताकभेदस्य ब्रह्मण्यभावाद् व्याप्तिः सुग्रहेति मन्यसे तर्ह्येवंविधानुमानस्य घटादिसत्त्वानपसारकतया किं तेनानुमितेन । यदि घटादयोऽपि सन्तः ब्रह्मापि च तथा तदा पक्षत्वेनाभिमते पारमार्थिकसत्त्वाधिकरणवृत्तितायाः सत्त्वेन बाधः । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसाधने तु शुक्तिरूप्यत्वादौ सिद्धेः सत्त्वादनुमानाप्रवृत्तिः ।

पक्षतावच्छेदकसामानाधिकरण्येनानुमितौ पक्षतावच्छेदक-

* अनुमानस्य दृष्टान्तमूलकत्वादिति भावः ।

सामानाधिकरण्येन साध्यसिद्धेर्विरोधित्वात् । अनुमित्सयाऽनुमानं तु स्वार्थानुमितावेव प्रवर्तते न तु परार्थानुमितावन्यथाऽतिप्रसङ्गादिति सुसूक्ष्ममवधारणीयं तर्कतत्त्वविदाम् तस्मात्पूतिकूष्माण्डीकृतोऽयमद्वैतसिद्धिकृतां प्रथमन्यायप्रयोगः ॥

विमतं मिथ्या ब्रह्मान्यत्वाच्छुक्तिरूप्यवदिति द्वितीयप्रयोगे तु दोषजन्यत्वं विसंवादिप्रवृत्तिजनकत्वमित्येवमाद्युपाधियोगेन पूर्वोदितरीत्यैव हेयत्वमित्यकिंचिदिदम् । दोषस्त्विह अविद्यातिरिक्तोऽस्यास्तुरेव वाच्योऽविद्यायास्तु दोषत्वे दोषतोऽपि तस्याः पुनर्दुर्ग्रहैव स्यादित्यवोचाम युक्त्युपन्यासपुरस्सरं पूर्वमेव ॥

किंच ब्रह्मान्यस्मिन्नलीके मिथ्यात्वासत्त्वाद् व्यभिचारः । सदन्यत्वमेव चेन्मिथ्यात्वं तदा घटादौ बाधः । असदन्यत्वं चेन्मिथ्यात्वं तदा घटादौ सिद्धसाधनम् । सद्वैलक्षण्यं सिषाधयिषितं चेत्तर्ह्यपि घटादौ तदसिद्ध्या बाध एव । एतेन "मिथ्या सद्विलक्षणम् । तेनासद्व्यावृत्तमिथ्यात्वस्यासत्यभावेऽपि न व्यभिचार" इति वदन् भिक्षुरपि निरस्तः सद्वैलक्षण्यस्यापि घटादावसिद्ध्या बाधावतारादिति ।

किञ्च पञ्चमप्रकाराविद्यानिवृत्तिपक्षे ब्रह्मान्यत्वस्य तत्र सत्त्वाद् व्यभिचारः । सत्त्वे सति ब्रह्मान्यत्वं चेद्धेतुस्तदाऽपि दोषजन्यत्वमुपाधिरित्युक्तमेव इदं चेह मिथ्यात्वं सिषाधयिषितं सद्वैलक्षण्यं ब्रह्मभिन्नत्वं वा अर्थक्रियाकारित्ववदन्यत्वं वा चिदन्यत्वं वा प्रतीयमानत्वे सति बाध्यमानत्वं वा तत्राद्ये ब्रह्मभिन्नत्वाद् ब्रह्मभिन्नत्वसाधने सिद्धसाधनम् । द्वितीये तु बाधः । अर्थक्रियाकारित्वलक्षणसत्त्वस्य घटादौ तत्रापि सम्प्रतिपन्नत्वात् । तृतीये सिद्ध-

साधनं चिदन्यताया घटादौ वादिनापि स्वीकारात् । चतुर्थे तु घटादेर्बाध्यमानत्वेवासम्भविनी । तथा हि तत्त्वमस्यादिवाक्यजन्यज्ञानं जगद्बाधकम् । अविद्याकल्पितवाक्यजन्यत्वात् । स्वयमविद्याप्रभवत्वाद्वा । अविद्याप्रत्युपस्थापितज्ञाचाश्रयत्वाद्वा । कल्पिताचार्यायत्तश्रवणजन्यत्वाद्वा । स्वकल्पितस्वमानसवृत्तिरूपत्वाद्वा । तात्पर्यभ्रमसहकृतवाक्यजन्यत्वाद्वा स्वाप्रबन्धनिवर्तकवाक्यजन्यज्ञानवत् । बौद्ध–दिगम्बर–क्षपणकादिशास्त्रजन्यान्यवृत्तिवद्वेत्यादिनाऽनुमानव्रातेन बाधकत्वेनाभिमतज्ञानस्याप्रामाण्यज्ञानास्कन्दितत्वेनाबाधकत्वात् । पूर्वोक्तरीत्या ब्रह्मज्ञानस्याप्यबाधकत्वाच्चेति ।

किञ्च भेदवादिना माध्वेन ब्रह्मणोऽनन्तकल्याणगुणाकरताया अङ्गीकारेण सतोऽनन्तकल्याणपरम्पराभाजनाद् ब्रह्मणो भेदस्य घटादौ स्वत एवाङ्गीकृतत्वात्सिद्ध*साधनेन कथं तेन ते जगन्मिथ्यात्वसिद्धिर्भविनीति विद्वांस एव मीमांसन्ताम् ॥

यदपि अत्यन्ताभावः प्रतियोग्यवच्छिन्नवृत्तिः नित्याभावत्वादन्योन्याभाववत् । प्रतियोग्यवच्छिन्नो देशः अत्यन्ताभावाश्रयः आधारत्वात्कालवदिति मिथ्यात्वानुमानयुगलम् । अत्र हेतुकुक्षौ नित्यपदानुपादाने ध्वंसे व्यभिचारः । अभावपदानुपादाने ब्रह्मणि व्यभिचार इति नित्यपदमभावपदं चोपात्तम् । तदप्यनुमितिशरीराप्रसिद्ध्या ऽऽभासत्वेन च सर्वथाऽयुक्तं, तथा हि अत्यन्ताभावः प्रतियोग्यवच्छिन्नवृत्तिरश्च यत्किंचिदत्यन्ताभावे उदासीनप्रतियोग्यवच्छिन्नवृत्तितायां सिद्धसाधनभिया घटात्य†न्ताभावो घटावच्छिन्नवृत्तिरित्यनुमितिशरीरं विशिष्यैव वाच्यं न च तादृशानुमितिसंभावनाऽपि आहा-

* सदन्यत्वस्य सद्वैलक्षण्यलक्षणस्य वा मिथ्यात्वस्य साध्यत्वेऽयं दोषः ।
† घटवान् घटाभाववान् । घटो घटत्वाभाववानित्यादिसाध्यपर्यवसानम् ।

र्यपरोक्षानङ्गीकारात् । न च घटात्यन्ताभावो घटावच्छिन्नवृत्तिरित्यनाहार्यज्ञानसंभवोऽपि स्वविरोधिधर्मधर्मितावच्छेदकस्वप्रकारकज्ञानस्य नियताहार्यरूपत्वेन घटात्यन्ताभाववान् घटवानिति ज्ञानस्येव घटावच्छिन्ने घटात्यन्ताभावज्ञानस्यानाहार्यस्यासंभवात् । एवं द्वितीयप्रयोगेऽपि घटावच्छिन्नदेशे घटात्यन्ताभावज्ञानमाहार्यमित्यनुमित्यप्रसिद्धिः ।

एवं च यथा पर्वतः पर्वतावृत्तिवह्निमान् । पर्वतो वह्निमान् पर्वतावृत्तेः । वह्निव्याप्यवह्निव्यभिचारिमानित्याद्यनुमित्यप्रसिद्धिराहार्यपरोक्षानभ्युपगमात्तथा प्रकृतेऽपीति कीदृशानुमितिशरीरमिति पश्यन्तु विचक्षणाः ।

किंच स्वविपरीतधीप्रतिबध्यज्ञानानामेव प्रवृत्तिनिवृत्तिजननलक्षणप्रयोजनजनकतया निरुक्ताहार्यज्ञानस्य चाहार्यत्वेनैवाप्रतिबन्धकस्याप्रतिबध्यस्य च कथं घटादिधर्मिकसत्यत्वज्ञानविरोधित्वम् । नापि च मिथ्यात्वानुमितेस्तावत्साफल्यसंभवो न यावदसौ घटादिधर्मिकसत्यताबुद्धिं प्रतिबध्नीयात् ।

न च यथा पर्वतो वह्निमान् वह्न्यभाववाँश्चेति समुच्चये पर्वते वह्नितदभावयोर्भाने जातेऽपि नाहार्यरूपत्वं तथा प्रकृते जातेऽपि घटावच्छिन्नदेशे घटात्यन्ताभावभाने नाहार्यरूपता निरुक्तानुमितेरिति वाच्यम् । तत्रान्यतरकोटावव्याप्यवृत्तित्वज्ञानेन विरोधभानसामग्र्यसंवलनाद् विरोधाभानेऽपि प्रकृते तथा वक्तुमशक्यत्वात् । न हि घटावच्छिन्नो देशो घटाभाववानित्यनुमितौ कोट्योरव्याप्यवृत्तित्वज्ञानमितरथा मिथ्यात्वानुमि*तावर्थान्तरप्रसङ्गात्

* अव्याप्यवृत्तित्वज्ञानानास्कन्दितज्ञानस्यैव विरोधित्वमिति भावः ।

एवं च कोट्योरव्याप्यवृत्तित्वज्ञानविरहकाले जायमानस्य घटावच्छिन्नो देशो घटाभाववानित्यस्याहार्यरूपत्वेन नानुमितिस्वरूपता ।

अव्याप्यवृत्तित्वज्ञानविरहकालीने संशये तु कोट्योः परस्परं विरोधो भासते स च प्रकारमुद्रया संसर्गमुद्रया वा भासते इत्यप्रकृतत्वादुपेक्ष्यते । एवं च संशयसमुच्चययोः कोट्योर्विरोधभानाभानाभ्यामेव विशेषः ।

अथवा ऽनुभवभेदेन संशये प्रकारताद्वयनिरूपितैकविशेष्यताशालित्वं समुच्चये तु प्रकारताद्वयनिरूपिता विशेष्यताद्वयीति विशेषः । आहार्ये तु एककोटिधर्मितावच्छेदकतया ऽपरकोट्यवगाहनमित्येष विशेषः ।

न चाव्याप्यवृत्तित्वज्ञानविरहकाले संशया*न्यविरोधिप्रतियोगितदभावविषयकज्ञानानुदयात्कथमाहार्यमुत्पद्यतामन्यथा तु एकत्र द्वयमिति रीत्या पर्वतोघटपटवानिति ज्ञानमिव पर्वतो वन्हितदभाववानित्यप्युत्पद्येत ज्ञानं न तु तथाऽङ्गीकुर्वन्ति तैर्थिकाः प्रतियोगितदभावयोरेकज्ञानाविषयत्वादिति वाच्यम् । ज्ञानान्तरे तथाऽनङ्गीकारेऽपि इच्छासाम्राज्येनाहार्ये तथाऽङ्गीकारात् । इच्छाघटितसामग्री सर्वतो बलवतीत्यविप्रतिपत्तिः । एवं निरुक्तस्थलद्वयेऽपि परामर्शस्याहार्यरूपत्वेन नानुमितिजनकता अनाहार्याप्रामाण्यज्ञानानास्कन्दितपरामर्शत्वेनैव परामर्शस्यानुमितिजनकत्वेन । घटात्यन्ताभावव्याप्याधारत्ववान् घटावच्छिन्नो देश इति ज्ञानस्याहार्यरूपत्वात् । न हि घटवति घटवदवृत्त्याधारत्ववत्ताबुद्धिरनाहार्या न वाऽऽहार्यपरामर्शोऽनुमितिजनकः ।

* संशयान्यत् यत्प्रतियोगितदभावविषयकं ज्ञानं तदनुत्पत्तेरित्यर्थः ।

न च घटवति देशे घटवत्ताया व्यावहारिकतया तदभावस्य च पारमार्थिकतया विरोधविरहेण नाहार्यरूपता निरुक्तानुमितिद्वयस्थलेऽपीति वाच्यम् । व्यावहारिकत्वस्य तत्कालाबाध्यत्वरूपत्वेन पारमार्थिकत्वस्य च कालत्रयाबाध्यत्वरूपत्वेन कालत्रयान्तर्गते वर्तमानकाले अबाध्यताया व्यावहारिकत्वकुक्षिनिक्षिप्तायाः कालत्रयाबाध्यत्वरूपपारमार्थिकत्वेन विरोधस्यावश्यकतया अनाहार्यरूपत्वासम्भवात् । अस्तु वा व्यावहारिकत्वं भवदभिमतरीत्या ब्रह्मज्ञानेतरज्ञानाबाध्यत्वं तावताऽपि पारमार्थिकत्वस्याबाध्यत्वघटितत्वेन अबाध्यत्वब्रह्मज्ञानबाध्यत्वयोर्विरोधावश्यम्भावेनाहार्यरूपता निरुक्तानुमितेरावश्यकी । यदि तु व्यावहारिकत्वं कल्पितत्वं तच्च स्वाभाववति प्रतीयमानत्वं वा ज्ञाननिवर्त्यत्वं वा उभयथाऽपि तु दोषं नातिवर्तते, तत्र प्रथमे स्वाभाववति प्रतीयमानत्वस्यैव मिथ्यात्वेन मिथ्यात्वानुमितेः पूर्वमेव मिथ्यात्वसिद्ध्याऽनुमित्यनुपपत्तिः ।

द्वितीये तु पारमार्थिकत्वस्यानिवर्त्यत्वरूपतया ज्ञाननिवर्त्यत्वानिवर्त्यत्वयोर्विरोध आवश्यक इति पूर्वोक्तदोषानतिलङ्घनम् ।

यदपि घटावच्छिन्नो देशो घटाभाववानित्यत्रावच्छिन्नत्वसंसर्गेण देशे घटाभावः प्रविष्ट इति तद्वति देशे घटाभावानुमाने नाहार्यरूपत्वमनुमितेरवच्छिन्नत्वसंसर्गेण घटवति घटाभावस्याविरोधादित्युत्प्रेक्षते कश्चित् तदतीव दुर्व्यवसितम् । यथा हि संयोगेन घटवति समवायसंबन्धेन घटाभावसत्त्वेऽपि घटो न मिथ्या तत्रेष्टापत्तेरेवमवच्छिन्नत्वसंसर्गेण घटवति संबन्धान्तरेण घटाभावानुमितावपि न घटो मिथ्येति किं तेनानुमानेन । तस्माद्येन संसर्गेण घटतदभावयोर्विरोधस्तेनैव संसर्गेण घटवति घटाभावोऽनुमातव्यस्तथा च स्वविरोधिधर्मधर्मिताऽवच्छेदकस्वप्रकारकत्वस्यावश्यकतयाऽऽ-

हार्थरूपत्वेनानुमित्यप्रसिद्धिरिति सूपपादितं भवति ॥ किञ्चात्यन्ताभावः प्रतियोग्यवच्छिन्नवृत्तिः । नित्याभावत्वादन्योन्याभाववत् । प्रतियोग्यवच्छिन्नो देशः । अत्यन्ताभावाश्रयः । आधारत्वात्कालवत् । इति पूर्वोपदर्शितप्रयोगद्वये अत्यन्ताभावभिन्नत्वं स्वप्रतियोग्यनवच्छिन्नत्वं च क्रमेणोपाधिरिति सोपाधिकमप्यनुमानद्वयं तथा हि यत्रयत्र प्रतियोग्यवच्छिन्नवृत्तित्वं भेदे तत्रास्त्यत्यन्ताभावभिन्नत्वं नित्याभावत्वं त्वत्यन्ताभावेऽपि वर्तते तत्रात्यन्ताभावभिन्नत्वं नास्तीति स्पष्टमुपाधिर्भवति । बाधोन्नीतस्य च पक्षेतरस्योपाधित्वं सर्वतैर्थिकानुमतमिति नेह कथमपि चोद्यावतारः ।

द्वितीयप्रयोगे तु यत्रयत्र घटात्यन्ताभावाश्रयत्वं तत्रतत्र स्वप्रतियोग्यनवच्छिन्नत्वम् । आधारत्वं तु कालेऽपि तत्र तु स्वप्रतियोग्यनवच्छिन्नत्वं नास्ति कालस्य कालिकेन सर्वाधारत्वादिति भवति स्वप्रतियोग्यनवच्छिन्नत्वमुपाधिः स्वप्रतियोग्यवच्छेदकदेशानवच्छिन्नवृत्तिकत्वं वोपाधिरित्युपाध्यभावेन साध्याभावाद्यनुमानेन स्थलद्वयेऽप्यनुमितिप्रतिबन्धः ।

ब्रह्म* । किंचिदवच्छिन्नम् । नित्यत्वात्परिमाणावच्छिन्नगगनवत् । ब्रह्म† । मिथ्या । आधारत्वाच्छुक्तिरूप्यवदित्यादिसाम्यं चानुमानयुगलस्येति कीदृशमद्वैतसिद्धिकृतामभिधानमिति कृतशास्त्रश्रमा एवावधारयितुं पारयन्ते इति किमितरेषु भृशव्याहारेणेति शम् ।

---

* पूर्वत्र मिथ्यात्वसाध्यकस्थले नित्याभावत्वं हेतूकुर्वता भवता गगनस्य नित्यत्वमप्यकामेनेवाङ्गीकृतमन्यथा नित्यत्वस्यैव हेतुत्वसंभवे व्याप्यत्वासिद्धिरिति नित्यत्वमपि गगनस्य भवताऽभ्युपेतमिति भावः । परमतमवष्टभ्य विशेषणसार्थक्यसमर्थनं तु खण्डनकृतां मतनिराकरणावसरे व्युदसिष्यते इति तत एव संतोष्टव्यम् ।

† ब्रह्मत्वं न परमार्थसन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकम् । ब्रह्मवृत्तित्वादित्येवमनुमिमानेन भवतैवाधारत्वमभ्युपेतं ब्रह्मण इति नाधारत्वमसिद्धमिति भावः ।

यच्च तैरेव–परमार्थसत्त्वं स्वसमानाधिकरणान्योन्याभावप्रतियोग्यवृत्ति । सदितरावृत्तित्वात् । ब्रह्मत्ववत् । ब्रह्मत्वमेकत्वं वा सत्त्वव्यापकम् । सत्त्वसमानाधिकरणत्वात् । असद्वैलक्षण्यवदिति न्यायप्रयोगद्वयमारचितं तन्मिथ्यात्वाभिनिवेशमात्रनिबन्धनम् । तद्यथा प्रथमानुमानेऽनुमानात्पूर्वमेव घटादीनां पारमार्थिकासत्त्वं सिद्धमुतानेनानुमानेन । तत्र प्रथमपक्षेऽनुमानवैयर्थ्यम् । द्वितीयपक्षे तु जगदसत्त्वपर्यवसायित्वमेतदनुमानस्य तदा ऽभविष्यद्यदि एतदनुमानात्पूर्वमेव प्रमाणान्तरेण पारमार्थिकसत्तावद् द्वयं बाधितमभविष्यन्न तु तथाऽस्ति पारमार्थिकसत्त्ववद्ब्रह्मनिष्ठान्योन्याभावप्रतियोगिनि घटादौ परमार्थसत्त्वस्याबाध्यमानत्वेन पारमार्थिकसत्त्ववन्निष्ठान्योन्याभावप्रतियोगिवृत्तित्वस्यैव ब्रह्मत्वे सत्त्वेन स्वसमानाधिकरणान्योन्याभावप्रतियोग्यवृत्तित्वासत्त्वात् । सदितरावृत्तित्वं च घटादौ प्रमाणसिद्धं निर्विशेषे ब्रह्मणि तु त्वदभिमतेऽनवतीर्णसकलप्रमाणे कल्पनैकसारे–निर्विशेषचिन्मात्रं ब्रह्म । मिथ्या । अविद्याकार्यज्ञान*गम्यत्वात् । अविद्याकल्पितज्ञाताश्रितज्ञानगम्यत्वाद्वा । अविद्याकल्पितज्ञानगम्यत्वाद्वा । यदेवं तत्तथा यथा स्वाप्नगज–गन्धर्वनगरादिरित्यादिनाऽनुमानव्रातेन मिथ्यात्वमेव सिध्यति । न चोक्तहेतुषु प्रविष्टमविद्याकल्पितज्ञानगम्यत्वादिकं फलव्याप्यत्वरूपं वा वृत्तिव्याप्यत्वरूपं वा । तत्र फलव्याप्यत्वं परस्मिन् ब्रह्मणि नाभ्युपेयत इति स्वरूपासिद्धिः । वृत्तिव्याप्यत्वमपि सर्वावभासके स्वतोभाते प्रयोजनाभावादेवावधीर्यते इत्यसिद्धो हेतुरिति कथं निर्विशेषे मिथ्यात्वसिद्धिरिति वाच्यम् । यतः फलव्याप्तिरेव निषिषेधयिषिता वृत्तिव्या-

* ज्ञानगम्यत्वादिकमिह वृत्तिव्याप्यत्वस्वरूपं तेन हेतोर्नावृत्तित्वमाशङ्कनीयम् ।

प्रिस्तु स्वीकृता । यथोक्तमद्वैतसाम्प्रदायिकैः—फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्यत्वमिष्यते ॥ इति । एतेन सविशेषस्य पक्षत्वे मिथ्यात्वमिष्टं निर्विशेषे तु स्वरूपासिद्धिरिति केषांचित्समाधानमप्यपहस्तितम् । निर्विशेषे साम्प्रदायिकैर्वृत्तिव्याप्यत्वस्याङ्गीकरणात् ।

अत्रेदमपि मीमांस्यते परमार्थसत्त्वं स्वसमानाधिकरणान्योन्याभावप्रतियोग्यवृत्ति । सदितरावृत्तित्वादित्यत्र न्यायप्रयोगे प्रविष्टं पक्षशरीरे परमार्थसत्त्वम् । हेतुशरीरे सदितरावृत्तित्वं च सत्स्वरूपतामतिक्रामति वा नातिक्रामति वा । तत्र पक्षकुक्षौ सत्स्वरूपतातिक्रमे निर्विशेषस्य न पक्षत्वमिति नेष्टसिद्धिः । सविशेषस्य पक्षत्वेनानिष्टापत्तिश्च । सत्स्वरूपतानतिक्रमे तु तत्र निर्विशेषसत्स्वरूपे ब्रह्मणि हेतुः कंचनविशेषमादध्याद्वा नादध्याद्वा तत्र प्रथमे सर्वविशेषप्रत्यनीकस्वभावस्य केनापि विशेषेण भवति स्वरूपप्रच्युतिरिति पूर्वोक्तदोष*तादवस्थ्यम् । निर्विशेषे पक्षे विशेषानाधायकश्चेद्धेतुस्तर्हि स्वरूपासिद्ध इत्युभयतःपाशारज्जुः । एवं हेतुःसदितरावृत्तित्वलक्षणः सत्स्वरूपतां चेदतिक्रामेत्तर्हि निर्विशेषे पक्षेऽलब्धपद एवेति स्वरूपासिद्धिः स्यात् । सविशेषे तु पक्षे लब्धपदोऽपि हेतुरकिंचित्करस्तस्यापक्षत्वात् । हेतोः सत्स्वरूपताऽनतिक्रमपक्षेऽपि निर्विशेषे सत्स्वरूपे पक्षे सत्स्वरूपस्य हेतोः परार्थानुमाने न्यायप्रयोगसापेक्षे नान्वयसंभवः । उद्देश्यतावच्छेदकविधेययोरैक्येन शाब्दबोधानुदयात् । न हि सन् †सन्निति शाब्दोऽन्वयो भवति । तस्मान्निर्विशेषमुपक्रम्य

* निर्विशेषस्य पक्षतैव न सिद्धेति भावः ।

† न चोद्देश्यतावच्छेदकविधेययोरैक्यस्थलेऽपि नोपनयवाक्यस्य बोधाजनकता विधेयकोटावधिकावगाहिनः शाब्दबोधस्य घटो नीलघट इत्यादिस्थलीयबोधानुरोधेनाङ्गीकरणीयतया उद्देश्यतावच्छेदकविधेययोरैक्यस्थलेऽपि औपनयिकबोधस्य व्याप्य-

न्यायप्रयोगानुष्ठानं केषांचिदमीषां प्रकृतिपण्डं पुरस्कृत्य प्रमादिनां षोडशवार्षिकप्रणयिनीपरिणयप्रक्रमसाहसायितमिति युक्तिकोविदाः ॥

किंचेह एकव्यक्तिवृत्तिकत्वमुपाधिरपि यत्र यत्र स्वसमानाधिकरणान्योन्याभावप्रतियोग्यवृत्तित्वनिश्चयो ब्रह्मत्वे तत्रैकव्यक्तिवृत्तिकत्वसत्त्वेन साध्यव्यापकत्वात् । सदितरावृत्तित्वं तु* घटत्वेऽपि तत्रैकव्यक्तिवृत्तिकत्वं नास्तीति साधनाव्यापकत्वाच्च । एवं च परमार्थसत्त्वम् । स्वसमानाधिकरणान्योन्याभावप्रतियोगिवृत्ति । एकव्यक्तिवृत्तिकत्वाभावादित्यन्जसैवोपाध्यभावेन साध्याभावोऽनुमास्यते । न च प्रकृते उपाधेः साध्यव्यापकत्वेऽपि साध्यं नोपाधिव्यापकमिति साध्योपाध्योः समव्याप्तिकत्वाभावात्कथमेकव्यक्तिवृत्तिकत्वमुपाधिरिति क्षुद्रतमं शङ्कनीयम् । उपाधेर्दूषकतायां साध्यव्यापकत्वस्यैवापेक्षितत्वेन व्यापकव्यभिचारिणो व्याप्यव्यभिचारित्वस्यावश्यकतया समव्याप्तिकत्वस्य नवीनैरुपेक्षणात् ।

वस्तुतस्तु दृष्टान्तपक्षसाधारणस्य स्वत्वस्यैकस्याभावात् स्वप्रतियोगिवृत्तित्वं स्वसामानाधिकरण्यं चेत्युभयसम्बन्धेन प्रतियोग्यवृत्तिर्व्यावहारिको यो भेदस्तद्विशिष्टं यत्तदन्यत्वस्यैव साध्यत्वपर्यवसानेन साध्योपाध्योः समव्याप्तिरपि सुनिर्वहेति न किंचिदवहीयते । एवमिहान्येऽप्युपाधयः स्वयमूहनीयास्तर्ककुशलैरिति विरमामो विस्तरभयात् ।

---

वगाहित्वेनाधिकावगाहनस्यावश्यकतया तदुपपत्तेरिति वाच्यम् । श्रोदाहरणकबोधस्य व्याप्त्यवगाहितया पुनरुपनयवाक्येन व्याप्तिविषयकबोधे पौनरुक्त्यभीत्या हेतुमान्पक्ष इत्याकारकताया एवोपनयवाक्यस्यावश्यकत्वेन उद्देश्यतावच्छेदकविधेययोरैक्ये श्रौपनयिकबोधस्य विधेयांशेऽधिकानवगाहनेन बोधानुदयस्यावर्जनीयत्वात् । अत एव तु तत्र व्याप्यः पक्षे न वेत्येव जिज्ञासा न तु हेतुर्व्याप्यो न वेति निगूढगदितम् ॥

* अनुमानात्पूर्वं मिथ्यात्वासिद्धेति भावः ।

ब्रह्मत्वमेकत्वं वा सत्त्वव्यापकम् । सत्त्वसमानाधिकरण्यत्वादसद्विलक्षणवदिति द्वितीयप्रयोगे सत्त्वव्यापकत्वमबाध्यनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपं ततश्च सत्त्वसामानाधिकरण्यमस्ति असद्विलक्षणे अस्ति च तत्राबाध्यब्रह्मनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपं साध्यं, ब्रह्मणि असद्विलक्षणं नेति प्रतीतेरसत्त्वात् । एवं च ब्रह्मणि अबाध्यनिष्ठभेदप्रतियोगितानवच्छेदकत्वसिद्धा ब्रह्मातिरिक्ते बाध्यत्वलक्षणमिथ्यात्वमञ्जसा सिध्यतीति स्पष्टमेव । पञ्चमप्रकाराविद्यानिवृत्तिपक्षे अबाध्यत्वेनाभ्युपेताविद्यानिवृत्तिनिष्ठभेदप्रतियोगितावच्छेदकमेव ब्रह्मत्वं भवतीति ब्रह्मत्वमुपेक्ष्य एकत्वस्य पक्षत्वानुसरणम् । तच्चाविनाशित्वादिरूपमिति भि*क्षुः । एवं च पञ्चमप्रकाराविद्यानिवृत्तिपक्षे अविद्यानिवृत्तेर्निवृत्तिप्रतियोगित्वविरहेऽपि अविनाशित्वरूपैकत्वस्य ब्रह्माविद्यानिवृत्तिसाधारण्यादबाध्यत्ववन्निष्ठान्योन्याभावप्रतियोगिताऽनवच्छेदकत्वाद् ब्रह्मत्वस्याबाध्यत्ववती या पञ्चमप्रकाराविद्यानिवृत्तिस्तद्वन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वेऽपि न क्षतिरिति भिक्षुतात्पर्यम् । अत्रैवं पराक्रमामः—पञ्चमप्रकाराविद्यानिवृत्तिपक्षे यद्यबाध्यद्वयसद्भावेऽपि एकत्वमबाध्यत्ववन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकं तदैतादृशसाध्यस्य घटादिसत्त्वानपसारकतयौदासीन्येन अकिंचिदिदम् ।

यद्धि साध्यमबाध्यद्वयं सहेत तर्हि तन्न सहेताबाध्यसहस्रमिति तु वक्तुं कः प्राज्ञः प्रसहेतापि । ऋते मिथ्याभिनिवेशात् । किंचात्र चिद्रूपत्वमुपाधिः । अबाध्यत्ववन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वनिश्चयविषयीभूते धर्मिणि ब्रह्मणि चिद्रूपत्वसत्त्वेन साध्यव्यापकत्वात् । सत्त्वसामानाधिकरण्यस्य च घटत्वेऽपि सत्त्वेन

* अद्वैतसिद्धिव्याख्यानकृद् गौड़ब्रह्मानन्दः ।

तत्र चिद्रूपत्वविरहेण साधनाव्यापकत्वाच्च । एवं च एकत्वमबाध्यत्ववन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकम् । चिद्रूपत्वाभावादित्युपाध्यभावेन साध्याभावोऽनुमास्यते । यदि च यादृशस्थले उपाध्यभावस्य पक्षतावच्छेदकावच्छेदेन न सत्त्वं किन्तु सामानाधिकरण्येन तादृशस्थलीयोपाधेरुपाध्याभासत्वेन परिगणनात् । प्रकृते च पक्षस्यैकत्वस्याविनाशित्वादिस्वरूपस्य पञ्चमप्रकाराविद्यानिवृत्ति--ब्रह्मोभयसाधारण्यादविद्यानिवृत्तौ चिद्रूपत्वाभावेऽपि ब्रह्मणि तदभावादयमुपाध्याभास इत्युच्यते । तदा ध्वंसाप्रतियोगित्वमुपाधिरस्तु तस्य अबाध्यत्ववन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपसाध्यव्यापकत्वात् । घटाद्यवच्छेदेन ध्वंसप्रतियोगित्वसत्त्वेन ध्वंसाप्रतियोगित्वस्य साधनाव्यापकत्वाच्च । एवं चैकत्वम् । अबाध्यत्ववन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकम् । ध्वंसप्रतियोगित्वादित्युपाध्यभावेन साध्याभावोऽनुमातव्यः । अथवा पञ्चमप्रकाराविद्यानिवृत्तिपक्षे अविद्यानिवृत्तेर्मिथ्यात्वाभावादबाध्यत्ववन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपसाध्यव्यापकतया घटाद्यवच्छेदेन साधनाव्यापकत्वाच्च मिथ्यात्वाभाव उपाधिः । एवं च सत्त्वसामानाधिकरण्यं साध्यव्यभिचारि । सोपाधिकत्वादित्येवं मुद्रया तत्रोपाधेर्दूषकत्वमित्युपाधितत्त्वविदां सर्वमपरोक्षमिति विस्तरभयादुदास्महे ।

यदपि—व्याप्यवृत्तिघटादिः । अन्याभावातिरिक्तसमानाधिकरणाभावमात्रप्रतियोगी । अभावप्रतियोगित्वात् । अभिधेयत्ववत् । अभिधेयत्वं हि परमते केवलान्वयित्वादन्योन्याभावमात्रप्रतियोगी । स च समानाधिकरण एव । अस्मन्मते तु मिथ्ये*वेति । नोभयथाऽपि

* एवकारोऽत्र भिन्नक्रमोऽप्यर्थकश्च घट एव प्रसिद्ध इत्यादिरीत्या तेन मिथ्याऽपीत्यर्थः ।

साध्यवैकल्यमित्यद्वैतसिद्धिकृतः । अत्र पक्षे व्याप्यवृत्तित्वानुक्तौ अव्याप्यवृत्तिसंयोगादौ स्वसमानाधिकरणाभावमात्रप्रतियोगित्वस्य वादिनाऽप्यङ्गीकृतत्वात्सिद्धसाधनप्रसङ्ग इति व्याप्यवृत्तित्वमुक्तम् ।

साध्यकुक्षौ अतिरिक्तान्तानुपादाने घटादिसमानाधिकरणध्वंसस्वरूपाभावादिप्रतियोगित्वस्य वादिनोऽनुमततया सिद्धसाधनप्रसङ्ग इत्यतिरिक्तान्तमुपात्तम् । प्रागभावस्तु सिद्धान्तिना नाङ्गीक्रियते । तदङ्गीकारपक्षे तु जन्याभावातिरिक्तस्य घटसमानाधिकरणघटप्रागभावस्य प्रतियोगित्वं घटादौ सिद्धमेवेति तद्वारणाय विनाश्यमात्रातिरिक्तत्वमपि देयमेव । अभावांशे स्वसामानाधिकरण्यानुक्तौ जन्याभावातिरिक्तस्य कुड्याद्युदासीनपदार्थवृत्तिघटाभावस्य प्रतियोगित्वं घटादौ सिद्धमेवेति अभावांशे सामानाधिकरण्यमुक्तं, तथा च घटादेर्घटाद्यधिकरणवृत्त्यभावप्रतियोगित्वं फलतीति न सिद्धसाधनम् । अत्र साध्यकुक्षौ मात्रपदानुपादाने जन्याभावातिरिक्तस्य घटादिसमानाधिकरणस्य घटभेदस्य प्रतियोगित्वं घटे सिद्धमेवेति तद्वारणाय मात्रपदम् । एवं च घटसमानाधिकरणघटभेदस्य प्रतियोगित्वसिद्धावपि नाभावमात्रप्रतियोगित्वं सिद्धं घटवति घटात्यन्ताभावस्य वादिनोऽननुमतत्वात् । एवं हेतुकुक्षौ प्रतियोगित्वादित्युक्तौ प्रतियोगितायाः संबन्धीयप्रतियोगित्वसाधारण्यादभावप्रतियोगित्वमुक्तम् ।

तदेतदनालोचितप्रमाणप्रमेयतत्सहकारितर्कमर्यादानां दुर्भणितमेव । यतोऽयं हेतुः सोपाधिकस्तथा हि यत्रयत्रजन्याभावातिरिक्तसमानाधिकरणाभावमात्रप्रतियोगित्वं ब्रह्मातिरिक्ते जगज्जाते तत्रानित्यत्वम् । अभावप्रतियोगित्वं तु अलीकेऽपि तत्रानित्यत्वं

नास्तीति भवत्यनित्यत्वमुपाधिः । एवं ध्वंसप्रतियोगित्वमुपाधिः । तस्य साध्यव्यापकत्वात् ।

अभावप्रतियोगित्ववत्यलीके ध्वंसप्रतियोगित्वविरहेण साधनाव्यापकत्वाच्च एवं ब्रह्मभिन्नत्वमप्युपाधिस्तथा हि साध्यवत्तानिश्चयविषयीभूते जगज्जाते ब्रह्मभिन्नत्वसत्त्वेन साध्यव्यापकत्वमथाभावप्रतियोगित्वस्य ब्रह्मण्यपि सत्त्वेन तत्र ब्रह्मभिन्नत्वस्य चासत्त्वेन साधनाव्यापकत्वं च ब्रह्मभिन्नत्वे इति भवति ब्रह्मभिन्नत्वमुपाधिः । यदि भेदप्रतियोगित्वं ब्रह्मणि नाभ्युपेयेत तर्हि अविद्ययाऽलीकेन च ब्रह्मणस्तादात्म्यं प्रसज्येतेत्यभावप्रतियोगित्वं ब्रह्मणोऽवश्यमभ्युपेयम् ।

एवं परिणामित्व—परिच्छिन्नत्वादृष्टजन्यत्वाल्पपरिमाणत्वादयः स्वयमूहनीया उपाधयो विचक्षणैः ॥ एवमविद्याऽलीकादितादात्म्यनिराकरणान्यथाऽनुपपत्त्या ब्रह्मणि भेदप्रतियोगित्वाङ्गीकारस्यावश्यकत्वेनाभावप्रतियोगित्वरूपहेतोस्तत्र सत्त्वाद् व्यभिचारोऽपि । न च वास्तवभेदप्रतियोगित्वं निवेश्यते ब्रह्मणि तु काल्पनिकभेदप्रतियोगित्वमिति न व्यभिचार इति वाच्यम् । ब्रह्मातिरिक्तस्य जगन्मात्रस्य काल्पनिकत्वमातिष्ठमानेन तथा वक्तुमशक्यत्वात् ।

अथ प्रतियोगिसमानसत्ताकाभावप्रतियोगित्वं विवक्ष्यते एवं च प्रतियोगिनो ब्रह्मणः परमार्थत्वाद् भेदस्य च काल्पनिकत्वेन न्यूनसत्ताकतया प्रतियोगिसमानसत्ताकाभावप्रतियोगित्वस्य ब्रह्मणि विरहेण न व्यभिचार इति चेन्न ब्रह्मातिरिक्ते काल्पनिकसत्ताया-ब्रह्मभिन्नस्य मिथ्यात्वसिद्धिपूर्वकतया ब्रह्मभिन्नस्य मिथ्यात्वासिद्धौ प्रतियोगिसमानसत्ताकाभावप्रतियोगित्वविवक्षाया अप्यसंभवात् ॥

अचेदं विचार्यते जन्याभावातिरिक्तस्य समानाधिकरणाभावस्याभिधेयत्वभेदस्य प्रतियोगित्वमभिधेयत्वे वर्तते इति न तेन जन्याभावातिरिक्तसमानाधिकरणाभावमात्रप्रतियोगित्वसिद्ध्याऽत्यन्ताभावसिद्धिरन्यथा तु संयोगेन घटे घटात्यन्ताभाव इति घटो घटभेदवान् घटाभाववत्त्वादित्यनुमानेन घटे घटभेदोऽप्यापद्येत । आपद्येत च ब्रह्मणोऽपि मिथ्यात्वम् । अविद्याऽलीकयोस्तादात्म्यापत्तिवारणायाभावप्रतियोगित्वस्य ब्रह्मण्यप्यङ्गीकरणीयत्वात् ॥

किंच जन्याभावातिरिक्तसमानाधिकरणाभावस्योदासीनसंबन्धावच्छिन्नप्रतियोगित्वं प्रमेयादौ वादिनोऽप्यभिमतमिति संबन्धविशेषावच्छिन्नप्रतियोगित्वमेव साधनीयं संबन्धविशेषावच्छि*न्नाभावप्रतियोगित्वहेतुना तथा च प्रमेयाभिधेययोः स्वरूप—तादात्म्याभ्यां केवलान्वयितयाऽभावप्रतियोगित्वविरहेण हेतोर्भागासिद्धत्वमपि । केवलान्वयितावच्छेदकसंबन्धेन प्रमेयाभिधेययोरत्यन्ताभावाप्रसिद्ध्या मिथ्यात्वासिद्धिश्च । यदि तु संबन्धविशेषनैरपेक्ष्येणाभावप्रतियोगित्वमात्रं हेतुरिति प्रमेयाभिधेययोरप्युदासीनसंयोगसमवायादिसंबन्धावच्छिन्नाभावप्रतियोगित्वसत्त्वान्न भागासिद्धिरित्यभिप्रैषि । संयोगसंबन्धावच्छिन्नाभावप्रतियोगित्वेन हेतुना समवायेन घटवति समवायसंबन्धावच्छिन्नप्रतियोगिताकघटात्यन्ताभावसाधनवत् प्रकृते संयोगादिसंबन्धावच्छिन्नाभावप्रतियोगित्वेन हेतुना जन्याभावातिरिक्तसमानाधिकरणाभावमात्रान्तर्गतस्य केवलान्वयितावच्छेदक—स्वरूपतादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य सिद्धिरिति प्रमेयाभिधेययोर्न मिथ्यात्वासिद्धिरपीति च वदसि । तर्हि निरुक्तरीत्याऽभावसाधने तस्य केवलान्वयितया तत्साधने प्रतियोगित्वस्यैव हेतुत्वसंभवे

* न हि संबन्धविशेषानवच्छिन्नप्रतियोगिताकाभावमात्रं हेतुरिति भावः ।

अभावप्रतियोगित्वं व्याप्यत्वासिद्धं, न च प्रतियोगित्वमपि हेतुस्तस्या-प्रयोजकत्वात् । नापि निरुपाधिकत्वादेव प्रतियोगित्वस्य प्रयोजकत्वमाशङ्कनीयं निरुक्तस्थले उपाधिगणस्य पूर्वमेवास्माभिरुपदर्शनात् ।

भेदप्रतियोगित्वमादाय सिद्धसाधनवारणाय मात्रपदोपादाने जन्याभावातिरिक्तान्तमनुपादेयमेव । स्वप्रतियोगिसमानाधिकरणयोर्ध्वंसप्रागभावयोः प्रतियोगित्वसिद्धावपि स्वसमानाधिकरणाभावमात्रप्रतियोगित्वासिद्ध्या सिद्धसाधनशङ्कानवसरात् । नहि केनचिद्रूपेण साध्यसिद्ध्या सिद्धसाधनं भवत्यन्यथा तु पर्वतस्तेजस्वीति निश्चयेऽपि पर्वतो वह्निमानित्यनुमितिप्रतिबन्धकः स्यात् । स्याच्च वागिन्द्रियेऽनित्यत्ववत्तानिश्चयसद्भावादनित्ये वाङ्मनसे इत्यनुमितेरपि प्रतिबन्धोऽनुमित्सां विना । तस्मात्साध्यतावच्छेदककुक्षौ जन्याभावातिरिक्तान्तं व्यर्थमित्यपार्थकत्वरूपनिग्रहस्थानमपि ।

किंच घटोजन्याभावातिरिक्तसमानाधिकरणाभावमात्रप्रतियोगीत्येवं चेत्साध्यशरीरं तर्हि जन्याभावातिरिक्तोघटसमानाधिकरणाभावः पटाद्युदासीनपदार्थाभावोऽपि तत्प्रतियोगित्वं तु न घटे इत्यप्रसिद्धिरपि । जन्याभावातिरिक्तयत्किञ्चिदभावप्रतियोगित्वसाधने तु भेदप्रतियोगित्वमादाय सिद्धसाधनमिति प्रव्यक्तमेव ।

किञ्चेह केव*लान्वयित्वमप्युपाधिः—केवलान्वयित्वस्य जन्याभावातिरिक्तसमानाधिकरणाभावमात्रप्रतियोगित्ववत्तानिश्चयविषयाभिधेयत्वादिव्यापकत्वात्—अभावप्रतियोगित्वमलीकेऽपि तत्र केवलान्वयित्वं नास्तीति साधनाव्यापकत्वाच्च ततश्च घटोजन्याभावातिरिक्तसमानाधिकरणाभावमात्रप्रतियोगित्वाभाववान् केवलान्वयि-

* केवलान्वयित्वस्योपाधित्वाभिधानं परमतमवष्टभ्य स्वमते तु अलीकस्योपाधित्वम् ।

त्वाभावादित्युपाध्यभावेन साध्याभावानुमानमिति कीदृशी न्यायप्रयुक्तिवैदुषी परेषामिति जगन्मात्रं साचितामुपप्रयातु ॥

इदमिहावधेयं जन्याभावातिरिक्तस्वसमानाधिकरणाभावमात्रप्रतियोगित्वसाधने उदासीनसंबन्धावच्छिन्नप्रतियोगिताकस्वसमानाधिकरणाभावप्रतियोगित्वमादाय सिद्धसाधनमिति तद्वारणाय विशिष्यैव तत्तत्संबन्धावच्छिन्नप्रतियोगित्वं साधनीयमेवं च भेदीयप्रतियोगितायास्तादात्म्यसंबन्धावच्छिन्नतया अत्यन्ताभावीयप्रतियोगितायास्तु तदतिरिक्ततत्तत्संबन्धावच्छिन्नतया नानुगमय्यैकरूपेण साध्यसाधनं संभवतीति कथं स्वसमानाधिकरणाभावमात्रप्रतियोगित्वसाधनेनाभिधेयत्वादिसाधारण्येन मिथ्यात्वसिद्धिप्रत्याशाऽपि । विशिष्य तु तत्तत्संबन्धावच्छिन्नत्वनिवेशने अभिधेयत्वे स्वरूपसंबन्धावच्छिन्नप्रतियोगित्वस्यान्यतरासिद्धतया न तद्दृष्टान्तेन साध्यसाधनं संभवति ।

स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धावच्छिन्नत्वेनानुगमय्य निवेशनप्रत्याशाऽपि दुराशैव । स्वप्रतियोगिमत्तादेः स्वयमननुगतत्वे तद्घटितस्यानुगमकत्वासंभवात् ।

साध्यतावच्छेदककुक्षिनिक्षिप्तायाः प्रतियोगिताया विरोधितानवच्छेदकसंबन्धानवच्छिन्नत्वेनानुगमोऽपि दुःशकः । तत्तत्तत्सर्वस्यापि संबन्धस्य विरोधितावच्छेदकसंबन्धत्वेन विरोधितानवच्छेदकसंबन्धानवच्छिन्नत्वनिवेशस्याप्यननुगमकत्वात् । तस्मात्सामान्यतो जन्याभावातिरिक्तस्वसमानाधिकरणाभावमात्रप्रतियोगित्वसाधने उदासीनसंबन्धावच्छिन्नप्रतियोगितामादाय सिद्धसाधनात् । विशिष्य तु अन्योन्याभावीयात्यन्ताभावीयप्रतियोगितयोर्विभिन्नसंब-

न्यावच्छिन्नतया अनुगमवार्ताया अप्यसंभवात् । जन्याभावातिरिक्त-स्वसमानाधिकरणाभावमात्रप्रतियोगित्वसाधनेऽभिधेयत्वादेरत्यन्ता-भावप्रतियोगित्वसिद्धा मिथ्यात्वसिद्ध्यभिधानमुन्मत्तगीतायितमिति।

किं च जन्याभावातिरिक्तसमानाधिकरणयत्किंचिदभावप्रति-योगित्वस्य प्रसिद्धावपि दृष्टान्तेऽभिधेयत्वे जन्याभावातिरिक्तसमाना-धिकरणाभावमात्रप्रतियोगित्वस्याप्रसिद्धा साध्याप्रसिद्धिरपि । एतेन "अभिधेयत्वं हि परमते केवलान्वयित्वादन्योन्याभावमात्रप्रति-योगि। स च समानाधिकरण एव। अस्मन्मते तु मिथ्यैवेति नोभयथाऽपि साध्यवैकल्यमित्यद्वैतसिद्धिकृतामभिधानं परास्तं निरुक्तदूषणगणग्रासेन तथाऽभिधानासंगतेः । तस्मात्सर्वथाऽस-ङ्गतोऽयमभावप्रतियोगित्वहेतुना जन्याभावातिरिक्तसमानाधिकर-णाभावमात्रप्रतियोगित्वसाधनोद्यमोऽद्वैतसिद्धिकृतामिति नापरोक्षं शास्त्रे कृतश्रमाणां विदुषामित्यलमनल्पजल्पितेन वाग्*विम्लाप-नापरपर्यायेण मादृशां मुमुक्षूणां भगवत्पादपद्मपरागपरायणानामेका-न्तिनाम् ॥

यदपि स† एव चक्षुषी अपवृज्य । अत्यन्ताभावः प्रतियोग्य-वच्छिन्नवृत्तिः । नित्याभावत्वादन्योन्याभाववत् । अत्यन्ताभावत्वं प्रतियोग्यशेषाधिकरणवृत्तिमात्रवृत्ति । प्रतियोग्यवच्छिन्नवृत्तिमात्रवृत्ति वा । नित्याभाववृत्तत्वात् । अन्योन्याभावत्ववत् । घटात्यन्ताभा-ववत्त्वं प्रतियोगिजनकाभावसमानाधिकरणवृत्ति । एतत्कपालसमान-कालीनैतद्घटप्रतियोगिकाभाववृत्तित्वात् । प्रमेयत्ववत् । एतत्कपा-लमेतद्घटात्यन्ताभावाधिकरणमाधारत्वात्पटादिवत् ।

---

* वाचोविम्लापनं हि तदित्यादिना तस्य मुमुक्षूनुद्दिश्य निषिद्धत्वादिति भावः ।

† अद्वैतसिद्धिकार एव ।

अत्र प्रथमन्यायप्रयोगस्याभासता तु पूर्वं स्वावसरे प्रपञ्चिता ॥

द्वितीयप्रयोगे तु अत्यन्ताभावत्वभिन्नत्वमुपाधिस्तस्य प्रतियोग्यशेषाधिकरणवृत्तिमात्रवृत्तित्ववत्तानिश्चयविषयान्योन्याभावत्वव्यापकत्वात् । नित्याभावत्वं तु अत्यन्ताभावत्वेऽपि वर्तते तत्र तु नात्यन्ताभावत्वभिन्नत्वमिति साधनाव्यापकत्वाच्च ।

पक्षेतरस्यानुपाधित्वं तु बाधानवतारस्थल एव प्रकृते तु वह्निरनुष्णो द्रव्यत्वादित्यादाविव बाधावतारात्पक्षेतरस्योपाधित्वं युक्तमेव । एवं ब्रह्म । मिथ्या । आधा*रत्वात्पटवत् । गौरेकशफः । पशुत्वादश्ववत् । मनुष्यः शृङ्गी । प्राणधारित्वान्महिषवत् । विन्ध्यः । उत्तरदिक्स्थः । पर्वतत्वात् । हिमालयवत् । चन्दनतरुर्गन्धशून्यः । वृक्षत्वादेरण्डवदित्याद्यनुमानाभाससाम्यं चोक्तानुमानस्य । न ह्यत्यन्ताभावत्वं नित्याभाववृत्तिर्धर्म इत्यन्योन्याभावसा†जात्यात्प्रतियोग्यशेषाधिकरणवृत्तिमात्रवृत्ति स्यादन्यथा तु नित्याभावत्वेन अत्यन्ताभावस्येव भेदस्यापि संसर्गाभावत्वे गोरपि पशुत्वादश्ववदेकशफत्वे मनुष्यस्यापि प्राणधारित्वान्महिषवच्छृङ्गित्वे विन्ध्यस्यापि पर्वतत्वाद्धिमगिरिवदुत्तरदिक्स्थत्वे चन्दनतरोश्च वृक्षत्वादेरण्डवद् गन्धशून्यत्वे ब्रह्मणश्चाधारत्वान्मिथ्यात्वे किं नाम बाधकमिति व्यवहारमात्रं कदर्थितं स्याद्देवमनुमिमानस्येति प्रव्यक्तमेव ।

यदि तु तत्र तत्र मनुष्यादौ शृङ्गित्वाद्यनुमाने प्रात्यक्षिकबाधसत्त्वान्न तथाऽनुमातुं शक्यमिति ब्रूषे हन्त तर्ह्यत्यन्ताभावत्वे प्रतियोग्यशेषाधिकरणवृत्तिमात्रवृत्तित्वानुमाने किं न बाधोऽवतरति ।

* ब्रह्मण्याधारत्वस्य मूलकृता भिक्षुणा चाङ्गीकृतत्वादाधारत्वेऽविवादः । सर्वधर्मविप्रतीपे ब्रह्मणि मिथ्यात्वस्य धर्मरूपतया न सिद्धिसंभव इति तु विकलभाषितं तथा सत्याधारत्वस्यापि भवदभ्युपेतस्यासंभवादिति निगूढगदितम् ।

† नियमनिरपेक्षसाजात्यमात्रेण प्रवृत्ततया जात्युत्तरमिदमिति निगूढभणितम् ।

यदि हि प्रतियोगितदभावावेवाविरुद्धौ स्यातां तर्हि जगति कस्य केन वा विरोधो वाच्यः स्यात्। यदि तु शुक्तित्व–तदभावयोरुभयोरेव व्यावहारिकतया प्रबलेन शुक्तित्वाभावाध्यक्षेण निर्बलमपरीक्षितप्रामाण्यकं शुक्तित्वानुमानं बाध्यते इति तच सांप्रतम् । इह तु प्रतियोगिनो व्यावहारिकतया तदत्यन्ताभावस्य चानुमित्सितस्य पारमार्थिकतया विरोधित्वाभावेन न बाध्यबाधकभावशङ्काऽपीति मन्यसे तर्हि ब्रह्मात्मविश्रान्तः पारमार्थिकोऽयं घटाभावो घटमुपमृद्य ब्रह्मात्माऽथवा घटे यथापूर्वमवस्थितेऽपि स तथेति निर्ब्रूहि । तत्र प्रथमे परमोदासीनस्वभावस्याज्ञानावकाशप्रदस्य ब्रह्मणो नोपमर्दकता । इतरस्य तु वस्तुजातस्य उपमृद्यस्वभावतयैव नोपमर्दकता । नाप्यनाधेयातिशये ब्रह्मणि चरमवृत्त्यादिनाऽतिशय आधातुं शक्यो नाप्युदासीनेन ब्रह्मणा वृत्तावेवातिशय इति न घटोपमर्दसंभावनाऽपि । द्वितीयपक्षे तु घटेऽवस्थितेऽपि चेद् घटमविद्विषन् घटाभावो ब्रह्मभूयमुपयातस्तर्हि किं तेन शब्दप्रयोगमात्रेण घटस्य क्षतमिति साधु मिथ्यात्वोपपादनं विज्ञपुङ्गवस्य ते ॥

एतेन"नन्वेवमप्यनौष्ण्यं तात्त्विकमिति तदनुमितिरपि न बाध्येत व्यावहारिकौष्ण्यग्राहिणाऽध्यक्षेण । एवं चादित्योयूप इत्यादावपि। तात्त्विकादित्यतां यूपस्याश्रित्य शरणं श्रुतिः। विरोधादुपजीव्येन न बिभेति कदाचन ॥ इत्याद्यपि स्यादिति चेन्न अनौष्ण्यं तात्त्विकं स्यादिति कोऽर्थः । यदि तत्त्वत औष्ण्यं नास्तीत्यर्थः। तदा अद्वैते पर्यवसानादिष्टापत्तिः । यदि व्यवहारतोऽपि नास्तीति तदा व्यवहाराविसंवादादिरूपपरीक्षितत्वविशिष्टमौष्ण्यप्रत्यक्षं बाधकमिति नानौष्ण्यस्य तात्त्विकत्वसिद्धिः । एतेन शैत्यानुमानं व्याख्यातम् । एवमादित्ययूपभेदस्य तत्त्वतो व्यव-

हारतो वा निषेधे योऽयमिति मिथ्यात्वानुमितेर्वह्निशैत्यानुमितिसाम्यनिरासकाद्वैतसिद्धिग्रन्थोऽप्यपास्तः ।

एवं पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः । विरोधादुपजीव्येन न बिभेति कदाचनेति खण्डनग्रन्थोऽप्येतदर्थसंवादी भवत्यपाकृतः । पूर्वोक्तयुक्तिभिर्वह्निवृत्त्यौष्ण्यादेस्तन्त्वतो निराकरणकारणानिरूपणेन तथा वक्तुमशक्यत्वाद् विशदयिष्यते चेदमग्रे ।

एतेन अत्यन्ताभावत्वं प्रतियोग्यवच्छिन्नवृत्तिमात्रवृत्ति । नित्याभाववृत्तित्वादन्योन्याभावत्ववदित्यपि प्रत्युक्तमनुमानं व्याप्तिनैरपेक्ष्येण साजात्यमात्रेण प्रवृत्ततया हेतोरप्रयोजकत्वात् । तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभाववृत्तित्वस्योपाधित्वाच्च ।

यच्च घटात्यन्ताभाववत्त्वम् । प्रतियोगिजनकाभावसमानाधिकरणवृत्ति । एतत्कपालसमानकालीनैतद्घटप्रतियोगिकाभाववृत्तित्वात् प्रमेयत्ववत् । एतत्कपालमेतद्घटात्यन्ताभावाधिकरणम् । आधारत्वात्पटादिवत् । अत्र प्रथमप्रयोगे साध्यकुक्षौ प्रतियोगिजनकेत्यस्य स्वप्रतियोगिजनकत्वमर्थः । स्वपदार्थोऽत्यन्ताभावः । तत्प्रतियोगिजनकाभावस्तद्घटप्रागभावस्तत्सामानाधिकरण्यं चानवच्छिन्नं निवेश्यम् । तेन तादृशाभावानवच्छेदकेन तद्घटध्वंसकालेनावच्छिन्नं तत्सामानाधिकरण्यं तद्घटात्यन्ताभावनिष्ठमादाय न सिद्धसाधनमर्थान्तरं वा । हेतुकुक्षौ कालीनान्तानुपादाने तत्कपालनाशजन्यतद्घटध्वंसत्वे व्यभिचारः । तदुपादाने तु तत्कपालनाशजन्यतद्घटध्वंसेनैतत्कपालसमकालीन इति तद्दोषपरिहारः । यादृशघट*व्यक्तेस्तु असमवायिकारणनाशादेव नाशो न तु

* एतादृशस्थलमङ्कुरस्थलपदेन दार्शनिका व्यवहरन्ति ।

तत्कपालनाशात्तद्विवचयो तु कालीनान्तमनतिप्रयोजनकमिति ध्येयम् । गगनादिस्वरूपानादिप्रतियोगिकाभावत्वे एतत्कपालसमानकालीनाभाववृत्तित्वरूपहेतुसत्त्वात्तच्च च प्रतियोगिजनकाभावसमानाधिकरणवृत्तित्वरूपसाध्यासत्त्वेन व्यभिचार इति तत्परिहाराय हेतुकुक्षौ एतद्घटप्रतियोगिकत्वनिवेशः । अभावपदानुपादाने तु एतत्कपालसमानकालीनैतद्घटप्रतियोगिकत्वं तद्घटसंयोगत्वेऽपीति व्यभिचारवारणायाभावपदम् । स्वप्रतियोगिसमानाधिकरणवृत्तित्वमात्रसाधनेऽपि मिथ्यात्वसिद्धिसंभवे गुरुरूपेण साध्यत्वमनुसरन् परस्यापि ध्वंसप्रागभावाधिकरणेऽत्यन्ताभाववत्त्वेऽविप्रतिपत्तिं स्फोरयति । एष परं विशेषो यदे*को निरवच्छिन्नघटाभावाधिकरणतां सर्वदा स्वीकरोति पा†रस्तु घटध्वंसप्रागभावकालयोरेवात्यन्ताभाववत्तां न तु घटवत्ताकालेऽपि । घटवत्ताकालेऽपि घटात्यन्ताभाववत्त्वे तदप्रत्यक्षमविद्यात्मकदोषवशाद्वा । पूर्वतनघटज्ञानाहितवासनात्मकदोषविशेषवशाद्वेति ग्रन्थकृत्तात्पर्यमिति वादिनो मन्यन्ते ।

अत्रैवं ब्रूमहे घटात्यन्ताभाववत्त्वस्य सामान्यतः पक्षत्वे संयोग—कालिक—स्वरूपादिसंबन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वे प्रतियोगिजनकाभावसमानाधिकरणवृत्तित्वसाधने सिद्धसाधनमिति विशिष्य समवायसंबन्धावच्छिन्नघटात्यन्ताभाववत्त्वमेव पक्षतयाऽनुसरणीयमेवं चात्र केवलान्वयित्वमुपाधिः । प्रतियोगिजनकाभावसमानाधिकरणवृत्तित्ववत्तानिश्चयविषयप्रमेयत्वादौ केवलान्वयित्वस्य सत्त्वेन साध्यव्यापकत्वात् ।

* निर्विशेषाद्वैतवादी । † भेदवादी ।

साधनाधिकरणे समवायसंबन्धावच्छिन्नघटात्यन्ताभाववत्त्वे केवलान्वयित्वविरहेण साधनाव्यापकत्वाच्च । न च समवायसंबन्धावच्छिन्नघटात्यन्ताभाववत्त्वं न पक्षः किं तु सामान्यतो घटात्यन्ताभाववत्त्वमेव नैतावताऽपि सिद्धसाधनभयं पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया सामानाधिकरण्येन साध्यसिद्धेरकिंचित्करत्वादेवं च केवलान्वयित्वस्य साधनव्यापकत्वमपि सामान्यतो घटात्यन्ताभाववत्त्वस्य केवलान्वयित्वादिति वाच्यम् । हेत्वधिकरणे संयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावे केवलान्वयित्वविरहेण साधनाव्यापकत्वस्यावश्यकत्वात् । समवायसंबन्धेन घटवति तत्संबन्धावच्छिन्नप्रतियोगिताकाभावमिच्छतः संयोगेन घटवत्यपि तत्संबन्धावच्छिन्नात्यन्ताभावस्याभ्युपेयतया तस्यापि केवलान्वयित्वेन साधनव्यापकमपि केवलान्वयित्वमिति कथमुपाधित्वं तस्येति तु बालिशभाषितं संयोगेन घटवति तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावस्य मिथ्यात्वसिद्धिपूर्वकतया मिथ्यात्वमप्रसाध्य तथा वक्तुमशक्यत्वादिति । एवं च प्रकृते केवलान्वयित्वमुपाधिरिति व्यक्तमुक्तं भवतीति सुसूक्ष्ममतिभिरवगन्तव्यम् ॥

न च प्रतियोगितायां प्रयोजनाभावेन संबन्धावच्छिन्नत्वानभ्युपगमात्कालिक—संयोगादिसंबन्धावच्छिन्नप्रतियोगिताकघटाभाववत्त्वादिविवक्षणं न संभवति । उचितं चेतद् घट—तदभाववत्ताधियोः । घटसंयोग—तदभाववत्ताधियोः । घटसंयोगसमवाय—तदभाववत्ताधियोः । घटसंयोगसमवायस्वरूप—तदभाववत्ताधियोश्चावश्यक्लृप्तप्रतिवध्यप्रतिबन्धकभावेनैवोपपत्तौ संबन्धविशेषमन्तर्भाव्य पृथक् प्रतिबन्धकताकल्पने गौरवेण तथा वक्तुमशक्यत्वादिति वाच्यम् । यतो ह्रदो वह्निमान् धूमादित्यादेः कालिकेन वह्निसाध्यकस्य कालिकेन धूम-

हेतुकस्थलस्य सद्धेतुतायाः । संयोगेन तत्साध्यकतद्धेतुकस्थलस्य चाभासताया व्यवस्थार्थं संयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नं प्रति तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकतदभावस्य स्वरूपेण यो निश्चयस्तस्य प्रतिबन्धकताऽवश्यं वक्तव्येत्यभावीयप्रतियोगितायां संबन्धावच्छिन्नत्वाभ्युपगमः । यदि हि वह्निमत्ताबुद्धौ वह्न्यभाववत्तानिश्चयत्वेनैव प्रतिबन्धकताऽभ्युपेयेत न तु तत्तत्संबन्धावच्छिन्नत्वान्तर्भावेण तदा पूर्वोक्तस्थलस्य संबन्धभेदेन सद्धेतुत्व–तदाभासत्वव्यवस्थायाः सर्वानुभवसिद्धाया अव्य*वस्थैव स्यात् । नापि वह्निसंयोगवत्ताबुद्धौ तत्संयोगाभाववत्तानिश्चयत्वेनावश्यक्लृप्तप्रतिबन्धकतामादाय व्यवस्थासंभवः । ह्रदो वह्निमानिति बुद्ध्या वह्निसंयोगस्यानुल्लेखेन तत्र वह्निसंयोगाभाववत्तानिश्चयस्य प्रतिबन्धकताया दुर्वचत्वात् । सामान्यतो वह्निमत्ताबुद्धौ च वह्निसंयोगाभाववत्तानिश्चयत्वेन विरोधित्वेऽनुभवविरोधो बाधव्यवस्थो†च्छेदश्च । वह्निसंयोगाभाववद्ध्रदस्य तु बाधरूपता ह्रदपक्षकवह्निसंयोगसाध्यकस्थल एव न तु ह्रदपक्षके संयोगेन वह्निसाध्यके स्थले । ह्रदपक्षके संयोगेन वह्निसाध्यकस्थले

---

* अयं भावः पूर्वोक्तस्थलस्य सद्धेतुतैव स्यात् । हेत्वाभासतैव वा न तूभयं-संबन्धभेदनिबन्धनं सद्धेतुत्वमसद्धेतुत्वंचेति ।

† विरोधिता हि एककालावच्छेदेन एकदेशावृत्तित्वघटिता । अत्र चैकदेशावृत्तित्वघटकं वृत्तित्वं संबन्धविशेषावच्छिन्नमूर्त्तिकमितरथा तु विरोधितैव कीदृशी घट–तदभावाद्योरुभयोरपि सर्वत्राविरोधेन समावेशसंभवात् । एवं च संबन्धमपुरस्कृत्य विरोधित्वाभिधानासंभवे प्रतियोगितायाः संबन्धावच्छिन्नत्वाङ्गीकार आवश्यकः । प्रतियोगितायाः संबन्धावच्छिन्नत्वाभ्युपगमेऽपि तत्तत्संबन्धावच्छिन्नप्रतियोगित्वस्यापि कालिकादिसंबन्धेन सर्वत्र सत्त्वात्तदप्यव्यावर्तकमिति तूभयसमाधेयमिति न ममैव पुनः पर्यनुयोगयन्त्रणा ।

विशेषः पुनरत्रत्यो निर्विकल्पकवादार्थे निरूपणीय इति कृतं पल्लवैः ।
निर्विशेषवस्तुनिराकरणपरामर्शिर्मतो वेदान्तवादार्थग्रन्थः ॥

बाधो न भवतीति न दोष इति तु पुनरनिपुणभणितमनुभवविरोधात् । परेणापि ह्रदपक्षकवह्निसंयोगसाध्यकस्थले बाधो न भवतीत्यस्यापि वक्तव्यत्वाच्च । तस्मात्प्रतियोगितायाः संबन्धानवच्छिन्नत्वाभ्युपगमो निर्निबन्धनो ऽनुभवातीतोयुक्त्यसहश्चेत्यन्यच्च सविस्तरं न्यरूपयाम ॥

एतत्कपालमेतद्घटात्यन्ताभावाधिकरणमाधारत्वात्पटादिवदिति द्वितीयप्रयोगे तु एतत्कपालभिन्नत्वमुपाधिः । बाधावतारे पक्षभिन्नत्वस्योपाधितायाः सर्ववादिसंमतत्वात् । पक्षभिन्नत्वस्योपाधित्वे बाधस्य पारमार्थिकत्वादिकं यथा न तन्त्रं तथा तु पूर्वमेव क्रियासमभिहारेण न्यरूपयाम इति किमिहाम्रेडितेन । किंचेह एतद्घटानधिकरणत्वप्रकारकप्रमाविषयत्वमुपाधिः । एतद्घटात्यन्ताभाववति गुणादौ एतद्घटानधिकरणत्वप्रकारकप्रमाविषयत्वसत्त्वेन साध्यव्यापकत्वात् । साधनवत्येतत्कपाले एतद्घटाधिकरणत्वप्रकारकप्रमाविषयत्वस्यैव सत्त्वेन साधनाव्यापकत्वाच्च । न चैतत्कपाले एतद्घटात्यन्ताभावमनुमित्सता एतद्घटानधिकरणत्वप्रकारकप्रमाविषयत्वस्याप्यङ्गीकरणीयतया एतद्घटानधिकरणत्वप्रकारकप्रमाविषयत्वस्य साधनव्यापकतया कथमुपाधित्वमिति शङ्क्यम् । तथा सति जगन्मात्रे एतद्घटानधिकरणत्वप्रकारकप्रमाविषयत्वाङ्गीकारे घटार्थिनां संग्रादिप्रवृत्ति—निवृत्तिव्यवस्थाकारणानिरूपणेन सर्वव्यवहारोपप्लवप्रसङ्गात् । व्यावहारिकपारमार्थिकभावमुपकल्प्य व्यवहारासांकर्यसंरक्षणप्रयत्नस्तु केषांचिदमीषां यथा निर्युक्तिकस्तथोपपादितमधस्तादेवेति किं तदुत्कीर्तनेन । एवमिह एतद्घटासंसृष्टत्वमेतदनिष्ठत्वमेतदसमवेतत्वमेतद्घटसमवायिकारण-

त्वाभावादय उपाधयस्तर्ककुशलैः स्वयमूहनीया इति कृतं विस्तरेण ॥ अथ वस्तुतत्त्वबुबोधयिषयेदमालोचयामः—

हेतुशरीरभूतमाधारत्वं पितृत्वपुत्रत्वादिवन्नित्यसनिरूपकः पदार्थ इत्याधारत्वस्य स्वनिरूपकैकनिरूप्यशरीरत्वेन नाधारत्वमात्रं हेतुः । नापि निरूपकनिरपेक्षः कश्चिदखण्डो धर्म आधारत्वं हेतुरिति युक्तं तस्यानुकूलतर्कानवतारेणाप्रयोजकत्वात् घटवदन्यत्वादेरुपाधित्वाच्च । नापि कुड्या*द्याधारत्वं सिद्धसाधनप्रसङ्गात् दृष्टान्ते साधनवैकल्याच्च । नापि सामान्यतो घटाधारत्वं तद्वति भूतले समवायसंबन्धावच्छिन्नैतद्घटात्यन्ताभावस्य परेणाप्यभ्युपेयत्वादप्रयोजकत्वात्सोपधिकत्वाच्च । नापि संयोगेन घटाधारत्वं संयोगेन घटवति समवायावच्छिन्नतदभावस्याङ्गीकारादेव । नापि सामान्यतः समवायेन घटाधारत्वं हेतुः । समवायेन घटान्तरवति कपालान्तरे समवायसंबन्धावच्छिन्नप्रतियोगिताकैतद्घटात्यन्ताभावस्यापि परेण स्वीकरणादेव । नापि प्रमेयत्वाद्याधारत्वं हेतुस्तद्घटकस्य प्रमेयत्वस्यैव हेतुत्वसंभवेऽधिकांशस्य वैयर्थ्येन हेतोर्व्याप्यत्वासिद्धत्वप्रसङ्गात् । किन्तु सम†वायेनैतद्घटाधारत्वादिकमवश्यं वाच्यमेवं च एतद्घटाधारत्वेन एतद्घटा†नाधारत्वसाधने परामर्शस्य नियताहार्यरूपत्वेन अनाहार्यपरामर्शस्यैवानुमितिजनकत्वेन च तादृशानुमितिसामग्रीवैकल्यादनुमित्यप्रसिद्धिः । अनित्य‡त्वेन नित्यत्वसाधने इव एतद्घटा-

* न्यायशरीरे साध्यतावच्छेदकहेतुतावच्छेदकादेर्विशिष्यैव निवेशनीयतया यत्किंचिदाधारत्वस्य हेतुत्वमनाशङ्कनीयमिति तत्पक्षमुपेक्ष्यास्महीति ध्येयम् ।

† अत्र समवायादिशब्देन व्यवहारः सौकर्यार्थं कृतो वस्तुतस्तु समवायस्थलाभिषिक्तो वैदान्तिकदर्शनाभिमतपदार्थ एवेह विवक्षितो वादिना प्रतिवादिना चेति न किं चिदाशङ्कनीयं परैः ।

‡ घटात्यन्ताभावाधिकरणत्व-घटानधिकरणत्वयोः सामनैयत्यमिति तात्पर्यम् ।

§ आत्मा नित्यः । अनित्यत्वादित्यादौ यथेति भावः ।

धारत्वेन एतद्घटानाधारत्वसाधने विरोधोऽपि । वक्ष्यमाणयुक्त्या एतद्घटात्यन्ताभावाधिकरणत्वप्रयोजकताया एतद्घटाऽनधिकरणत्वे एव व्यवस्थापयिष्यमाणतया एतद्घटानधिकरणत्वस्य चैतदनुमितेः पूर्वमेतत्कपाले सत्त्वासिद्ध्या स्वरूपासिद्धिश्च । व्यावहारिकैतद्घटाधिकरणत्वेन पारमार्थिकैतद्घटाभावाधिकरणत्वसाधनोपवर्णनकौशलेन परस्य* पलायनपरायणतां तु पूर्वमेव परास्थमिति किं तादृशयुक्त्याऽऽभासोपन्यासेनेति तु विद्वद्विभाव्यमित्यलमनल्पजल्पितेन ।

किंचैतद्घटाधिकरणत्वस्यैतद्घटात्यन्ताभावप्रयोजकत्वाङ्गीकारे घटानधिकरणीभूतगुणकर्मादिनिष्ठैतद्घटात्यन्ताभावप्रयोजकत्वमन्यस्य कस्यचिदङ्गीकरणीयमितरच्च चान्यस्यैवेति महागौरवमिति न तस्य प्रयोजकत्वम् । अत एव तस्मिन् सत्यभवतस्तेन विनाऽपि भवतस्तदप्रयोजकत्वमिति सर्वैस्तैर्थिकाः । एवं च एतद्घटात्यन्ताभावाधिकरणताप्रयोजकता न घटाधारत्वे किं त्वनेतद्घटाधारत्वे । अनेतद्घटाधारत्वस्य च गुणकर्मादिसाधारण्याल्लाघवमपि । एवं च अनेतद्घटाधारत्वस्यैतद्घटात्यन्ताभावप्रयोजकस्यैतद्घटवत्यसत्त्वात् कथमेतद्घटात्यन्ताभावाधिकरणत्वमेतत्कपाले सिध्येदित्यल्पधीधर्षणोऽयं तर्कनिपुणानां कृतगुरुकुलश्रमाणां सुसूक्ष्मधियां तु स्वयमूहनीयो विषय इत्युपरमामः ॥

यत्तु ब्रह्मत्वं† न परमार्थसन्निष्ठान्योन्याभावप्रतियोगिताऽवच्छेदकम् । ब्रह्मवृत्तित्वादसद्वैलक्षण्यवत् । परमार्थसत्प्रतियोगिको भेदो न परमार्थसन्निष्ठः । परमार्थसत्प्रतियोगिकत्वात् । परमार्थस-

---

* निर्विशेषाद्वैतिनः ।

† मिथ्यातुच्छविलक्षणवृत्तिभेदप्रतियोगितानवच्छेदकत्वं साध्यं तेनाबाध्यनिष्ठभेदघटितात्सत्त्वव्यापकमित्युक्तानुमानाद् भेदः ।

त्वावच्छिन्नप्रतियोगिकाभाववत् । भेदत्वावच्छिन्नम् । सद्विलक्षणप्रतियोग्यधिकरणान्यतरवत् । अभावत्वाच्छुक्तिरूप्यप्रतियोगिकाभाववत् । परमार्थसन्निष्ठो भेदः । न परमार्थसत्प्रतियोगिकः । परमार्थसदधिकरणत्वात् । शुक्तिरूप्यप्रतियोगिकभेदवत् इति, ।

तदेतदनधिगतन्यायप्रयोगाणां प्रयोगमाचमसारसारं बालोपलालनाकल्पं तथाहि अत्र प्रथमानुमाने पक्षीभूतं ब्रह्मत्वं ब्रह्मवृत्तिः कश्चन धर्मो वा निर्विशेषं ब्रह्मैव वा । आद्ये धर्मधर्मिभावाङ्गीकारे निर्विशेषस्य पक्षताक्षतिः । कल्पिते सविशेषे परमार्थसन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वसिद्ध्या महदनिष्टं च तवापन्नमिति वृद्धिमिच्छतो मूलहानिन्यायनिपातः । वस्तुतो निर्विशेषेऽपि कल्पितधर्मधर्मिभावमादाय न्यायप्रयोग इत्यप्यसारिष्ठसमाध्यभिधानं यद्यकल्पितोऽपि धर्मधर्मिभावः क्वचिदभविष्यत्तदेदमुक्तं व्यावर्तकमभविष्यन्न चैतदेवं भवता धर्मधर्मिभावस्य कल्पितस्यैव सर्वत्राङ्गीकारात् । न केवलं कल्पितोघटादिरेव सविशेषः किन्तु कल्पितं सर्वमेव सविशेषमिति कल्पितविशेषस्य ब्रह्मवृत्तिधर्मस्य पक्षत्वे पूर्वो*क्तदोषानुषङ्ग आवश्यकः ।

निर्विशेषं ब्रह्मैव ब्रह्मत्वमिति द्वितीयकल्पे तु तत्र ब्रह्मवृत्तित्वरूपहेतुविरहेण स्वरूपासिद्धिः । न हि निर्विशेषे आधाराधेयभावानुप्रवेशसंभावनाऽपि । अनुप्रवेशे वा निर्विशेषतासंभवः ।

परमार्थसन्निष्ठान्योन्याभावप्रतियोगिताऽनवच्छेदकत्ववत्तानिश्चयविषये ब्रह्मण्यबाध्यत्वसत्वेन साध्यव्यापकत्वात् । शुक्तिरूप्यस्य शुक्त्यवच्छिन्नचिद्वृत्तित्वेन ब्रह्मवृत्तितया तत्र चाबाध्यत्वविर-

† निर्विशेषस्य पक्षताक्षतिः ।

हेयं साधनाव्यापकतया च अबाध्यत्वं भवत्युपाधिः । एवं च साध्यं पक्षावृत्ति सोपाधिकत्वादिति मुद्रया उपाधेर्दूषकत्वमित्यवहितैरव-धेयम् । किञ्च घटादेरपि घटाद्यवच्छिन्नब्रह्मवृत्तितया तत्र च पर-मार्थसद्भूतब्रह्मनिष्ठान्योन्याभावप्रतियोगितावच्छेदकधर्मवत्त्वाद् व्य-भिचारः स्फुट एव । यदि तु तादृशव्यभिचारपरिहाराय निरवच्छिन्न-ब्रह्मवृत्तित्वं विवक्ष्यते तदा पुनरप्रसिद्धिर्ब्रह्मत्वस्याधेयताऽधिकर-णतानिरूपकताऽनवच्छेदकधर्मत्वेन शुद्धे ब्रह्मणि कस्यापि भवता वृत्ति-त्वस्याङ्गीकर्तुमशक्यत्वात् । शुद्धं स्वप्रकाशमित्यादेरपि व्यवहारस्य भवता अशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थसमाश्रयणेन शुद्धस्य कथ-मप्यपुरस्कार्यत्वात् । माध्वादिमते तु अभिन्ननिमित्तोपादानब्रह्मकार-णत्वाङ्गीकारेण । विष्णोःसकाशादुद्भूतं जगत्तत्रैव च स्थितमिति विष्णुपुराणोक्तरीत्या जगतो ब्रह्मवृत्तितया तत्र च साध्यविरहेण व्यभिचारः स्पष्ट इति किमाम्रेडनेन । ब्रह्मत्वं परमार्थसन्निष्ठान्यो-न्याभावप्रतियोगितावच्छेदकमतद्व्यावृत्त*धर्मत्वाद् । घटत्ववदि-त्यनेन सत्प्रतिपक्षताऽपि । भवति हि अतद्व्यावृत्तधर्मो घटत्वं तच्च परमार्थसत्स्वरूपब्रह्मनिष्ठान्योन्याभावप्रतियोगितावच्छेदकमपि । अत्र च विपक्षबाधकस्तर्को घटब्रह्मणोरैक्यप्रसङ्ग एव । यदि हि अतद्व्यावृत्तं घटत्वं परमार्थसत्स्वरूपब्रह्मनिष्ठान्योन्याभावप्रतियो-गितावच्छेदकं नाभविष्यदविष्यत्तदा घटब्रह्मणोरैक्यमिति ।

परमार्थसत्प्रतियोगिको भेदो न परमार्थसन्निष्ठः । परमार्थ-सत्प्रतियोगिकत्वात् । परमार्थसत्त्वावच्छिन्नप्रतियोगिकाभाववदिति द्वितीयन्यायप्रयोगोऽपि घटप्रतियोगिकोभेदो न घटनिष्ठः । घटप्र-तियोगिकत्वात् । घटत्वावच्छिन्नप्रतियोगिकाभाववदित्याभासस-

* अतद्व्यावृत्तधर्मत्वमसाधारणधर्मत्वम् ।

मानः । तथा हि यदि परमार्थसत्प्रतियोगिकभेदस्य परमार्थसन्निष्ठत्वाभावः परमार्थसत्त्वावच्छिन्नप्रतियोगिकाभावं निदर्शनीकृत्य परमार्थसत्प्रतियोगिकत्वमात्रेण साध्येत तर्हि घटेऽपि घटप्रतियोगिकभेदासंभवेन घटैक्यमभ्युपगच्छताम् . एकं घटमपहाय घटान्तरे पुंसां प्रवृत्त्यादिकं सर्वथैव बाध्येतेत्यविदितलोकयात्रो भवान् कथं दार्शनिकः । यदि तु तत्र घटव्यक्तीनां बहुत्वात्तथा माभूदिह तु ब्रह्मण एव सजातीयविजातीयस्वगतभेदशून्यस्य सत्स्वरूपत्वादपरस्य च वस्तुजातस्यातथाभावान्न परमार्थसत्प्रतियोगिकभेदोऽपि ब्रह्मणीति समाधत्से । तत्किं ब्रह्माण्डभाण्डं सकलं मिथ्याभूतमवधृत्य सर्वं सिषाधयिषितमर्थं सिद्धवदभिधातुं प्रवृत्तोऽसि । उतासिद्धमर्थमनुमातुम् । तत्र प्रथमे कल्पे पदार्थान् सिद्धवदभिधाय शिष्या वाचंयमाः प्रतारणीया भवन्ति । न तु बलिनो वादिनो वाग्मिनः । तद्यदि केवलं सत्स्वरूपे ब्रह्मणि सत्त्वमवधृतं तदतिरिक्तस्य च मिथ्यात्वं तर्हि किमनुमानेन । असिद्धार्थानुमानपक्षे तु घटादयोऽपि सत्त्वेन विवादविषया इति घटव्यक्तीनां बहुत्वात्तत्र यथा घटप्रतियोगिकभेदस्य घटे सत्त्वं तथा ब्रह्मणः सत्स्वरूपस्यैकव्यक्तिकत्वेन तत्र ब्रह्मणि ब्रह्मप्रतियोगिकभेदस्यासंभवेऽपि घटादिप्रतियोगिकभेदस्यावश्यकतया घटादीनां चाबाध्यत्वेन स्वपरनिर्वाहकत्वादिना च सत्त्वस्य साधितत्वात्परमार्थसद्भूतघटादिप्रतियोगिको भेदो भवति परमार्थसत्स्वरूपब्रह्मनिष्ठ इति परमार्थसत्प्रतियोगिको भेदो न परमार्थसन्निष्ठ इत्यनुमानं बाधितं भवति ।

किंच परमार्थसत्प्रतियोगिको भेदो द्वित्वादिना व्यासज्यवृत्तिधर्मेण परमार्थसत्यपि वर्तते इति परमार्थसत्प्रतियोगिकत्वं व्यभिचारि । यदि व्यभिचारवारणाय हेतौ परमार्थसत्प्रतियोगि-

कत्वमपहाय परमार्थसत्त्वावच्छिन्नप्रतियोगिताकत्वमुच्येत । तदा स्वरूपासिद्धिः । यथा हि घटप्रतियोगिकभेदो घटत्वावच्छिन्नप्रतियोगिताकभेदश्चोभौ विभिन्नावेवं परमार्थसत्प्रतियोगिकभेद—परमार्थसत्त्वावच्छिन्नप्रतियोगिताकभेदावपि भिन्नौ ।

किंचैवं सति परमार्थसत्प्रतियोगिको भेदो न परमार्थसन्निष्ठः । परमार्थसत्त्वावच्छिन्नप्रतियोगिताकत्वात् । परमार्थसत्त्वावच्छिन्नप्रतियोगिताकभेदवदिति न्यायाकारो वक्तव्यस्तदेतदसमञ्जसं हेतोर्दृष्टान्तभावासंभवात् । न ह्यन्वयमुपयाति पर्वतो वह्निमान् । धूमात् । यथा धूम इति ।

अथ घटाद्यनेकव्यक्तिकस्थले भेदे बाधनिश्चयस्य प्रतिबन्धकत्वानुरोधेन सामान्यधर्मावच्छिन्नत्वाङ्गीकारस्यावश्यकत्वेऽपि परमार्थसत्या ब्रह्मव्यक्तेरैक्यान्न तत्र सामान्यधर्मावच्छिन्नत्वमङ्गीकुर्मः । एवं च परमार्थसत्प्रतियोगिकत्वमेव हेतुरस्तु न तु परमार्थसत्त्वावच्छिन्नप्रतियोगिताकत्वमिति चेन्न द्वित्वादिना व्यासज्यवृत्तिधर्मेण स्वस्मिन्नपि स्वभेदसत्त्वेन तद्व्यावृत्तये सामान्यधर्मावच्छिन्नत्वाङ्गीकारस्यावश्यकत्वात् । ब्रह्मव्यक्तिरेव सतीत्येतन्निश्चयस्य जगदसत्त्वनिश्चयपूर्वकतया मिथ्यात्वानुमितेः पूर्वं तथा निश्चयासंभवेन निरुक्तानुमित्या ब्रह्मव्यतिरिक्तस्य मिथ्यात्वासिद्धेश्च ।

यत्तु भेदत्वावच्छिन्नं सद्विलक्षणप्रतियोग्यधिकरणान्यतरवत् । अभावत्वाच्छुक्तिरूप्यप्रतियोगिकाभाववत् । अत्र सद्विलक्षणं यत्स्वप्रतियोगिस्वाधिकरणयोरन्यतरत्तत्संबन्धित्वं साध्यम्, । एवं च सदन्यप्रतियोगिकत्व—सदन्याधिकरणकत्वयोरन्यतरवत्त्वं साध्यत्वेन पर्यवस्यति ततश्च स्वत्वस्याननुगमेन दृष्टान्तपक्षसाधारणस्य स्वत्वस्यैकस्याभावे-

ऽपि न दोषः । नापि स्वत्वस्य साध्यदृष्टान्तभेदभिन्नत्वेऽपि स्वरूपासिद्धिर्दृष्टान्तवैकल्यं चेति वादिनोऽभिमन्यन्ते ।

तदतिस्थवीयः सोपाधिकत्वात्तथा हि यत्रयत्र साध्यवत्तानिश्चयविषयत्वं शुक्तिरूप्यप्रतियोगिकाभावे तत्रास्ति कल्पितप्रतियोगिकत्वमिति साध्यव्यापकत्वम् । अभावत्वं तु अलीकनिष्ठं वा घटनिष्ठं वा ब्रह्मभेदेऽपि तत्र कल्पितप्रतियोगिकत्वं नास्तीति साधनाव्यापकत्वाच्चेति कल्पितप्रतियोगिकत्वं भवत्युपाधिः । एवं च भेदत्वावच्छिन्नं सद्विलक्षण—प्रतियोग्यधिकरणान्यतराभाववत् । कल्पितप्रतियोगिकत्वाभावादित्युपाध्यभावेन साध्याभावोऽनुमातव्यः । किंच भेदत्वावच्छिन्नं सद्विलक्षण—प्रतियोग्यधिकरणान्यतरवत् । अभावत्वादिति *जातिः । नियमनैरपेक्ष्येण अभावत्वमात्रसाजात्येनानुमानस्य प्रवृत्तत्वात् । अन्यथा तु ब्रह्मत्वं परमार्थसद्भिन्नत्वव्याप्यम् । दृश्या†वृत्तिधर्मत्वादलीकत्ववत् । वायुद्व्यणुकं रूपवत् । अनित्यत्वात्कपालवदित्यपि साध्येत । दृश्यावृत्तिधर्मत्ववत्तया साजात्यमात्रेण परमार्थसद्भिन्नत्वव्याप्यत्वस्य निर्विशेषे ब्रह्मणि । अनित्यत्वसाजात्येन रूपवत्ताया वायवीयद्व्यणुके च वक्तुं शक्यत्वादिति सुसूक्ष्ममतिभिः स्वयमिह बहूहनीयमिति विस्तरभिया तूष्णीमास्महे ॥

यदपि परमार्थसन्निष्ठभेदः । परमार्थसत्प्रतियोगिकत्वाभाववान् परमार्थसदधिकरणत्वात् । शुक्तिरूप्यप्रतियोगिकभेदवदित्यत्र परमार्थसति परमार्थसद्भेदासंभवेन परमार्थसन्निष्ठभेदे परमार्थसत्प्र-

* जायते साधर्म्यवैधर्म्यमात्रेणोपतिष्ठते व्याप्तिनैरपेक्ष्येण हेतुतयेति बाहुलकात्कर्तरि क्तिना जातिपदसिद्धिः ।

† शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वं ततश्च शुद्धे ब्रह्मणि अलीके च केवलं शब्दजन्यवृत्तिविषयत्वसत्त्वादस्त्यदृश्यत्वं ब्रह्मालीकोभयसाधारणो धर्म इत्यदृश्यत्वेन यथाऽलीके परमार्थसद्भिन्नत्वसिद्धिस्तथा निर्विशेषे ब्रह्मण्यपीति ग्रन्थग्रन्थिः ।

तियोगिकत्वाभावानुमित्या सती व्यक्तिरेकैव सिध्यतीति तदतिरिक्तस्य जगतो मिथ्यात्वनिर्वाहः । एवं च परमार्थसदधिकरणकत्वमस्ति शुक्तिरूप्यादिप्रतियोगिके चिदात्मवर्तिनि भेदे भवति च तत्र परमार्थसत्प्रतियोगिकत्वाभावोऽपीति परेऽभिनिविशन्ते ।

तदेतदपि दुरभिनिवेशमात्रं तथा हि यथा घटे घटत्वावच्छिन्नप्रतियोगिताकभेदासंभवेऽपि घटप्रतियोगिकभेदवत्त्वमबाधितं तथा सति सत्त्वावच्छिन्नप्रतियोगिताकाभावविरहेऽपि सत्प्रतियोगिकाभावसत्त्वे किं प्रतिबन्धकम् । एवं च घटनिष्ठोभेदोघटप्रतियोगिकत्वाभाववान् । घटाधिकरणकत्वादित्याभाससाम्यं च । घटव्यक्तीनां नानात्वस्येव परमार्थसतीनां व्यक्तीनामप्यानन्त्यस्य परेणाभ्युपेयतया प्रमाणान्तरेण तदनिराकृत्य परमार्थसत्या व्यक्तेरैक्यस्यानेनानुमानेन व्यवस्थापयितुमशक्यत्वात् ।

किं चात्रानुमाने कल्पितप्रतियोगिकत्वमुपाधिस्तस्य परमार्थसत्प्रतियोगिकत्वाभावनिश्चयविषयशुक्तिरूप्याद्यभावव्यक्तिव्यापकतया परमार्थसदधिकरणकत्वं ब्रह्मवर्तिनि घटभेदेऽपि तत्र कल्पितप्रतियोगिकत्वं नास्तीति साधनाव्यापकत्वाच्च । एवं च परमार्थसन्निष्ठोभेदः । परमार्थसत्प्रतियोगिकः । कल्पितप्रतियोगिकत्वाभावादित्यनुमानेन स्थापनानुमानप्रतिरोधादकिंचिदिदम् । न च ब्रह्मवर्त्तिनि घटाद्यभावे घटादेर्मया* कल्पितत्वाङ्गीकारेण कल्पितप्रतियोगिकत्वसत्त्वेन साधनव्यापकतया कथमुपाधित्वं तस्य भवेदिति वाच्यम् । मिथ्यात्वानुमितेः पूर्वं घटादेः कल्पितत्वासिद्ध्या तथाऽभिधानानुपपत्तेः । अस्तु वा साधनाव्यापकत्वसंदेहेन कल्पितप्रतियोगिकत्वं संदिग्धोपाधिस्ततोऽप्ययं संदिग्धोपाधितया पक्षे साध्यसंदेह-

* निर्विशेषब्रह्मवादिना ।

मादधत् पक्षे साध्यनिश्चयरूपामनुमितिमुपरुन्ध्यादेवेति वाद्यभिमतार्थभञ्जकतया किं नोऽवशिष्यते विधातुमिति मतिमतां विमर्शः ॥

एवं चाचानुमाने परेऽप्युपाधयोमतिमतां स्वयमूहनीया इति किमु भूरि भणितेन ।

यदपि शिष्येषु महतीमारभटीमारचय्य मिथ्यात्वं ब्रह्मतुच्छोभयातिरिक्तत्वव्यापकम् । सकलमिथ्यावृत्तित्वात् । मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वाद्वा । दृश्यत्ववत् ।

दृश्यत्वं परमार्थसदवृत्ति । अभिधेयमात्रवृत्तित्वाच्छुक्तिरूप्यत्ववत् । दृश्यत्वं परमार्थसद्भिन्नत्वव्याप्यम् । दृश्येतरावृत्तिधर्मत्वात् । प्रातिभासिकत्ववत् ।

उभयसिद्धमसद्विलक्षणं मिथ्यात्वासमानाधिकरणधर्मानधिकरणम् । आधारत्वाच्छुक्तिरूप्यत्ववत् । इति विप्रवदन्ते वादिनस्तदिदं सर्वथाऽनभिज्ञजनव्यामोहनमात्रं चरमन्याये पूर्वोक्तयुक्तिभिराधारत्वस्य हेतुत्वासम्भवाद् वक्ष्यमाणयुक्तिभिर्निरुक्तन्यायमात्रस्याभासत्वाच्च । अत्र मिथ्यात्वं ब्रह्मतुच्छोभयातिरिक्तत्वव्यापकमित्यस्य मिथ्यात्वत्वं व्यापकतावच्छेदकमित्यर्थस्तेनोदासीनेन मेयत्वाभिधेयत्वादिरूपेण व्यापकत्वमादाय न सिद्धसाधनावसरः । सकलमिथ्यावृत्तित्वादित्यस्य च यद्विशिष्टस्य व्याप्यं मिथ्यात्वं तत्त्वादित्यर्थः । मिथ्यात्वं यद्यद्धर्मावच्छिन्नाभाववद्वृत्ति तत्तद्धर्मभिन्नत्वादिति तु पार्यवसानिकोर्थः । एवं च मिथ्यात्वत्वं ब्रह्मतुच्छोभयातिरिक्तत्वव्यापकतावच्छेदकम् । मिथ्यात्वं यद्यद्धर्मावच्छिन्नाभाववद्वृत्ति तत्तद्धर्मभिन्नत्वादिति पर्यवस्यति ।

अत्रैवमभिदध्महे प्रथमन्याये सकलमिथ्यावृत्तित्वरूपहेतुना मिथ्यात्वे ब्रह्मतुच्छोभयातिरिक्तत्वव्यापकत्वसिद्धया जगन्मिथ्यात्वसि-

द्धिस्तदाऽभविष्यद् यद्यभविष्यन्मिथ्याभूतसकलान्तःपातित्वं व्यावहारिकस्य घटादेर्जगतस्तदेव त्वसिद्धं, सिद्धौ वाऽनुमानवैयर्थ्यं, न हि हेत्वसिद्धौ साध्यसिद्धिसंभवः ।

किंच पञ्चमप्रकाराविद्यानिवृत्तिपक्षे ब्रह्मतुच्छोभयातिरिक्तायाः अविद्यानिवृत्तेर्मिथ्यात्वानङ्गीकारेण मिथ्यात्वं ब्रह्मतुच्छोभयातिरिक्तत्वव्यभिचारीति बाधोऽपि । मुखमस्तीति न्यायेन ब्रह्म–तुच्छ–पञ्चमप्रकाराविद्यानिवृत्तिव्यतिरिक्तत्वव्यापकत्वोक्तौ तु किमपराद्धमस्माभिरेव यदस्मदभ्यर्थितं साध्यतावच्छेदककुक्षौ जगद्व्यतिरिक्तत्वविशेषणप्रक्षेपं न क्षमसे । यदि तु जगतोमिथ्यात्वादेव तादृशविशेषणं न सहे इति ब्रूषे तर्हि जगन्मिथ्यात्वसिद्धेः पूर्वमेव कथमेवमवधारयितुं पारयसि । न हि केनचित्प्रमाणेनानवधार्यार्थं प्रामाणिकाः श्रद्दधते । यथा च श्रुतिर्मिथ्यात्वे न प्रमाणं तथा स्वावसरे साधूपपादयिष्यामः ।

मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वाद्वेति अद्वैतसिद्धिकृदुक्ते पूर्वोक्तपक्षसाध्यके हेत्वन्तरे अत्यन्ताभावाप्रतियोगित्वमाचोक्तौ दृष्टान्ते दृश्यत्वे साधनवैकल्यं ब्रह्मालीकवृत्त्यत्यन्ताभावप्रतियोगित्वाद् दृश्यत्वस्येति तद्वारणाय मिथ्यात्वसमानाधिकरणान्तमुपात्तम् । तदुपादाने तु दृश्यत्वस्य ब्रह्मादिवृत्त्यत्यन्ताभावप्रतियोगित्वेऽपि मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वान्न दृष्टान्ते साधनवैकल्यम् । पक्षकुक्षौ मिथ्यात्वशब्दस्य भावप्रधा*ननिर्देशरूपतया मिथ्यात्वत्वार्थकतया हेतुकुक्षावपि मिथ्यात्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वमर्थः । न च हेतुकुक्षौ

* ब्रह्मण्यलीके च विद्यमानो योऽत्यन्ताभावस्तत्प्रतियोगित्वादित्यर्थः ।

प्रकृत्यर्थताच्छेदकताऽवच्छेदकरूपेण प्रकृत्यर्थतावच्छेदकमुख्यविशेष्यकबोधजननतात्पर्येणोच्चारणं भावप्रधाननिर्देशः ।

समानाधिकरणान्तं माभूत् । भवतु च ब्रह्मत्वमेयत्वयोर्दृष्टान्तत-योपन्यासस्तयोरुभयोरपि धर्मयोरत्यन्ताभावप्रतियोगिताऽनवच्छेद-कत्वेन दृष्टान्तत्वसंभवादिति वाच्यम् । उभयोरपि दृष्टान्तयोरन्यत-रासिद्धतयोपन्यासासंभवात् । मेयत्वस्य भेदवादिभिरत्यन्ताभावा-प्रतियोगित्वाङ्गीकारेऽपि मिथ्यात्ववादिभिस्तदनङ्गीकारात् ।

मिथ्यात्ववादिभिर्ब्रह्मणोऽत्यन्ताभावाप्रतियोगित्वाभ्युपगमे-ऽपि भेदवादिभिस्तदनभ्युपगमाच्च ।

मिथ्यात्वत्वं ब्रह्मतुच्छोभयातिरिक्तत्वव्यापकतावच्छेदकमि-त्यनुमितिशरीरे प्रविष्टं यद् व्यापकतावच्छेदकत्वं तत्कुत्रचिनिष्ठाभा-वीयप्रतियोगिता दैशिकविशेषणतासंबन्धावच्छिन्ना ग्राह्याऽन्यथा तु ब्रह्मतुच्छोभयातिरिक्तत्वसमानाधिकरणोदासीनसंबन्धावच्छिन्नाभाव-प्रतियोगितावच्छेदकमेव मिथ्यात्वत्वमिति बाधः स्यात् । एवं मि-थ्यात्वसमानाधिकरणात्यन्ताभावप्रतियोगिताऽनवच्छेदकत्वरूपे हेतौ प्रविष्टप्रतियोगिताऽपि दैशिकविशेषणतासंबन्धावच्छिन्ना ग्राह्येत-रथा मिथ्यात्वत्वे मिथ्यात्वसमानाधिकरणाभावीयोदासीनस्वरूप-संयोगादिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वसत्त्वात्स्वरूपासिद्धिः स्यादिति प्रतियोगिता संबन्धविशेषावच्छिन्नोपादेयेति वादिनो मन्यन्ते ।

अत्रैवं ब्रूमहे मिथ्यात्वं ब्रह्मतुच्छोभयातिरिक्तत्वव्यापकम् । मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वादित्यनुमाने घटा-दीनां मिथ्यात्वसिद्धौ मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियो-गित्वरूपहेतुसिद्धिः । तदप्रतियोगित्वरूपहेतुसिद्धौ च मिथ्यात्व-सिद्धिरित्यन्योन्याश्रयः ।

किं च घटादौ यदि मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं सिद्धं तर्हि किमवशिष्यतेऽनुमातुं हेतुसिद्ध्यैव घटादेर्मिथ्यात्वसिद्ध्या सिद्धसाधनात् ।

यदि तु मिथ्यात्वे ब्रह्मतुच्छोभयातिरिक्तत्वव्यापकत्वस्य सिषाधयिषितत्वात्तेन रूपेण च साध्यस्य पूर्वमनिर्णयान्न हेतुमत्ताज्ञानमात्रेण सिद्धसाधनावकाश इति ब्रूषे तदाऽपि हेत्वसिद्धिर्न हि मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं घटादौ वादिनाऽभ्युपेयते तेन घटादेरबाध्यत्वाभिधानात् ।

ब्रह्मभिन्नत्वादिना मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं घटादेरनुमाय हेतुसिद्ध्यनन्तरमेतदनुमानप्रवृत्तिरिति तु पुनराशामोदकमात्रं ब्रह्मभिन्नत्वादेर्मिथ्यात्वसाधने सोपाधिकतायाः पूर्वमेव व्यवस्थापितत्वात् ।

दृश्यत्वादिना मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वानुमानमपि बालिशवाग्विलसितमात्रं दृश्यस्य घटादेः सत्यत्वे दृग्दृश्यसंबन्धस्य व्यवस्थापयिष्यमाणतया दृश्यत्वेन तदनुमानासंभवात् । वस्तुतस्तु येन निर्विशेषदृशिमपहाय नान्यदभ्युपेयते तन्मत एव दृग्दृश्यसंबन्धानुपपत्तिरित्यादिकं पराक्रम्य निरूपयितास्मो दृग्दृश्यसंबन्धनिरूपणप्रकरणे ।

किंचेदमनुमानम् । ब्रह्मतुच्छोभयातिरिक्तत्वं न मिथ्यात्वव्याप्यम् अबाध्यवृत्तित्वात् । दोषाजन्यवृत्तित्वात् । अमिथ्यात्वेन योगिज्ञानविष*यत्वाद्वा । भगवदीयज्ञानगोचरत्वाद्वा । ब्रह्मतुच्छोभयातिरिक्तत्वं न मिथ्यात्वव्याप्यम् । पञ्चमप्रकाराविद्यानिवृत्तिवृत्तित्वा-

---

* मिथ्याभूतं पदार्थजातं योगिनो मिथ्यात्वेनैवावधारयन्तीति योगिज्ञानविषयत्वं नाबाध्यत्वप्रयोजकमिति तु बालिशभाषितं पदार्थाधिगमानन्तरं योगिनामपान्तरतमःप्रभृतीनां प्रवृत्तेः शास्त्रेषूद्घुष्यमाणत्वात् ।

दित्यादिनाऽनुमानान्तरेण सत्प्रतिपक्षितमपि । तस्मान्मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वेन मिथ्यात्वानुमानप्रयत्नः केषांचिदमीषां पद्भ्यां संचरमाणस्य जङ्घालस्य चन्द्रलोकगमनप्रयत्नायित इति विचक्षणाः ।

यत्तु दृश्यत्वं परमार्थसदवृत्ति । अभिधेयमात्रवृत्तिधर्मत्वाच्छुक्तिरूप्यत्ववत् । अत्र दृश्यत्वं दृक्प्रतियोगिकत्वविशिष्टं व्यावहारिकं तादात्म्यम् । प्रपञ्चनिष्ठब्रह्मतादात्म्यस्य ब्रह्मण्यपि सत्त्वेन बाधादाद्यं विशेषणम् । ब्रह्मणो ब्रह्मणि प्रातीतिकतादात्म्ये बाधादन्त्यम् । न च तयोरुभयोर्ब्रह्मवृत्तित्वं मिथ्येति साध्यसत्त्वान्न बाध इति वाच्यम् । तथाऽपि सर्वदृश्यमिथ्यात्वसिद्धिरूपस्य प्रकृतानुमानफलस्योक्तविशेषणाधीनत्वात् । अत्र हेतौ मात्रपदं संपातायातं तेन वाच्यावृत्तित्वाद् ब्रह्मावृत्तित्वादिति यावत् । पक्षभेदनिबन्धनः पूर्वोक्तानुमानाद् विशेषः ।

यदपि च दृश्यत्वं परमार्थसद्भिन्नत्वव्यापकम् । दृश्येतरावृत्तिधर्मत्वात् । प्रातिभासिकत्ववदित्येतौ तु न्यायप्रयोगौ सोपाधिकत्वादुपेक्षणीयौ । तथा हि परमार्थसदवृत्तित्ववत्तानिश्चयविषयीभूतशुक्तिरूप्यत्वादिव्यापकं भवति कल्पनैकशरीरवृत्तित्वं तच्चाभिधेयमात्रवृत्तिघटत्वाद्यव्यापकमपि घटत्वादिमति कल्पनैकशरीरवृत्तित्वाभावात् । एवं द्वितीयानुमाने दोषगण ऊहनीयः स्वयं कुशलैः ।

न च योगाचारपक्षे दृष्टिसृष्ट्यादिपक्षे च कल्पनैकशरीरत्वं साधनव्यापकमपीति कथं तस्योपाधित्वमिति शङ्क्यम् । निर्विशेषब्रह्मवादिना विचारस्योपक्रान्ततया तयोरुभयोरपि पक्षयोरनाशङ्कनीयत्वात् । योगाचारमतं शरणीकृत्य घटादेः कल्पनैकशरीरत्वाभ्युपगमे तु कि मी*यकल्पनास्वरूपा घटादयो भावा इति भणतु भवान् ।

* कस्य कल्पनास्वरूपा इत्यर्थः ।

येन यदा ज्ञायन्ते तत्कल्पनाविश्रान्तात्मानस्ते इत्युक्तौ तु कल्पनानामसाधारणत्वाद् घटादीनां सर्वोपभोगयोग्यानां साधारण्यानुपपत्तिः। साधारण्यमपि कल्पनैकशरीरमिति का क्षतिरित्युक्तौ तु साधारण्यस्य तदेकमात्रव्यवहरणीयत्वे सर्वसाधारण्यभङ्गशङ्का तदवस्थैव। स्वप्नोपलब्धमहाजनतादिव्यवहारवदमुष्य सर्वस्य व्यवहारजातस्य व्यवहर्तृमात्रकल्पनाविश्रान्तात्मस्वरूपत्वाभ्युपगमे तु मणिमयमण्डपप्रविष्टसारमेयोपकल्पितानेकस्वसजातीयश्वोपलम्भेन समुत्पन्नद्वेषोद्रेकस्य भषमाणस्य योगाचारस्येव प्रतिध्वनिकल्पितानेकशुनकविपक्षस्य शुनो व्यवहारवदेष ते स्वकल्पितसर्वपरिकरस्य कथाव्यवहारः कथङ्कारं विद्वत्सदसि नोपहासास्पदतामुपेयात्। वादस्य तद्विषयस्य प्रतिवादिनः प्रमाणादेर्मध्यस्थस्य कथाफलस्वरूपस्यैकतरकोट्यवधारणस्य वादिविजयस्य वा भवतैव कल्पितत्वेन ततोऽस्य वैया*त्यमवलम्ब्यापि वैजात्यकल्पनानवकाशात्।

व्यवहरतां विदुषामपि व्यवहारो यावद्व्यवहारकालं पश्वादिभिर्भवत्येव समान इति काऽधिकाऽधिक्षेपसंभावना ब्रह्मवादिनामस्माकमितीष्टापत्तौ तु क्व नाम भवन्नये मोक्षकथाप्रस्तावसंभवोऽपि। मोक्षो हि सम्यग्ज्ञानाद् भवतीति सर्ववादिसिद्धान्तः। तच्च ज्ञानं पश्वादीनामिव कल्पनैकविश्रान्तरूपमिति तस्य समी†चीनता सर्वथाऽपि दुर्वचे‡ति मोक्षो नाम त्वन्मते काकदन्तकथाप्रस्तावसदृश इति स्पष्टमेवाधिकं तु दृष्टिसृष्टिपक्षप्रतिक्षेपावसरेऽभिधास्यते।

* धार्ष्ट्यम्।

† अबाध्यार्थविषयकत्वेन तथाभावपक्षेऽपि सर्वथाऽसंभवो। तथाभावग्राहकस्य ज्ञानस्य स्वयं दोषजन्यत्वेनाविश्वास्यतया अबाध्यार्थविषयत्वग्राहकत्वासंभवादित्येवमादि सविस्तरं निरूपितमस्माभिर्ग्रन्थान्तरे।

‡ अबाध्यार्थविषयकत्वादिलक्षणस्य मोक्षजनकज्ञाननिष्ठवैलक्षण्यस्यापि पश्वादिसाधारणबुद्ध्या दुरवधारणतया मोक्षजनकज्ञाने वैलक्षण्यस्य गीर्वाणगुरुणाऽपि वक्तुमशक्यत्वादित्यादिनाऽग्रे विवेचयिष्यमाणत्वादिति भावः।

तत्सुष्ठूक्तं कल्पनेकशरीरवृत्तित्वं साध्यव्यापकं भवद् घटत्वाद्यव्यापकतया भवत्युपाधिरिति । एवं दोषसहकृतेन्द्रियजन्यज्ञानविषयपदार्थवृत्तित्वं दोषजन्यवृत्तित्वं बाध्यवृत्तित्वं प्रातिभासिकवृत्तित्वमित्येवमाद्यनेकोपाधियोगादकिंचिदिदमनुमानमिति सन्तः प्रतिजानते । यथा च निरुक्तोपाधिषु स्वाभावेन साध्याभावोन्नयने न व्यर्थविशेषणघटितत्वादिशङ्काप्रसरसंभवस्तथा पूर्वमेवास्माभिः प्रसङ्गतोऽसकृदुपपादितमिति नेहाधिकं वक्तुमवसरः ।

एवं दृश्यत्वं परमार्थसदवृत्ति । अभिधेयमात्रवृत्तित्वाच्छुक्तिरूप्यत्ववदिति द्वितीयप्रयोगेऽपि दोषजन्य*त्वमुपाधिः । न च दोषजन्यत्वपदेन यदि सामान्यतो दोषजन्यत्वमुच्यते तदा अविद्यात्मकदोषजन्यताया जगन्मात्रे निर्विशेषाद्वैतिनाऽङ्गीकृतत्वात्साधनव्यापकमपि तदिति कथं तस्योपाधित्वं यदि त्वागन्तुकदोषजन्यत्वमुच्यते तदा तत्साधनाव्यापकमपि भवतीति भवत्युपाधिस्तथाऽपि स्वाभावेन साध्याभावोन्नयने आगन्तुकदोषजन्यत्वरूपहेतौ आगन्तुकांशवैयर्थ्येन व्यर्थविशेषणघटितत्वाद् व्याप्यत्वासिद्धिरिति कथं दोषजन्यत्वमुपाधिरिति वाच्यम् ।

अविद्याया दोषरूपत्वाङ्गीकारे दोषत्वादोषत्वव्यवस्थाया अप्यसंभवेन अविद्याया दोषरूपत्वानङ्गीकारादिति पूर्वमेवास्माभिरुपपादनात् । त्वं†याऽपि च विश्वमिथ्यात्वस्यागमादिबाधोद्धारप्रकरणे जगन्मिथ्यात्ववादिनो मते नाभाव उपलब्धेः । वैधर्म्याच्च न स्वप्नादिवदिति ब्रह्मसूत्रद्वयोपरोधमाशङ्क्य स्वप्नवैधर्म्योक्तेः । विमतं

* अत्र साध्यव्यापकतावच्छेदकसंबन्धः । साधनाव्यापकतावच्छेदकसंबन्धश्चोहनीयः स्वयं सूरिभिः ।

† अद्वैतसिद्धिकारेण ।

निस्तत्त्वं तर्कपीड्यत्वान्मरुमरीचिकाजलवदित्यनुमाने बाध्यत्व–प्रमाणागम्यत्व–दोषजन्यत्वाद्युपाधिप्रदर्शनपरत्वादिति समाहितं तत्तच्च निरुक्तानुमाने दोषजन्यत्वं तदैवोपाधिः स्याद्यदि अविद्याया दोषरूपत्वं नाङ्गीक्रियेत । इतरथा तु अविद्यारूपदोषजन्यतायाः साधनव्यापकतया कथमुपाधित्वमिति स्वयमेव विवेचय । यदपि दृश्यत्वादिना घटादेर्दोषजन्यत्वमनुमाय दोषजन्यत्वस्य साधनव्यापकत्वप्रदर्शनसंनहनं तदप्यस्थाने साहसमात्रं दृश्यत्वस्य दोषजन्यत्वाव्याप्यत्वात् । यथा चैतत्तथाऽग्रे साधु* निरूपयिष्यामः । एवमन्येऽपि निरुक्तयुक्त्या कुशलैरुपाधयः स्वयं समुद्भाव्या इति तूष्णीमास्महे विस्तरभीरवः ।

ब्रह्मत्वं परमार्थसद्भिन्नत्वव्याप्यम् । दृश्यावृत्तिधर्मत्वादलीकत्ववदित्याभाससाम्यं च द्वितीयप्रयोगे । यदि तु कल्पितमात्रस्य स्वसमानजातीयपदार्थपूर्वकत्वनियमादकल्पितं किंचित्प्रधानमपेक्षणीयमिति तदेव सन्मात्रं ब्रह्मेत्यगत्याऽङ्गीकरणीयमापद्यते इति न ब्रह्मत्वे परमार्थसद्भिन्नत्वव्याप्यत्वसिद्धिरिति ब्रूषे हन्त तर्हि कल्पितस्याकल्पितपूर्वकत्त्वनियमोऽपि न सिद्धः किन्तु स्वसजातीयपूर्वकत्वनियमः । स च पूर्वप्रपञ्चसजातीयोत्तरप्रपञ्चजननेनैव निर्वहतीति नाकल्पितपदार्थपूर्वकत्वावश्यंभावसिद्धिः ।

अध्यासो हि स्वकारणं संस्कारमपेक्षते न तु संस्कारस्य संस्कारविषयस्य अधिष्ठानस्य वा सत्यतां यथा घटो दण्डमपेक्षते न तु सन्तं दण्डमनुपयोगाद†न्यथासिद्धत्वाच्च । नापि प्रमाजन्यसंस्का-

* दृग्दृश्यसंबन्धनिरूपणावसरे ।

† परमतं प्रविश्य तन्मतरीत्यैव तच्चिराकरणप्रस्तावोऽयं वादिनोनिपद्यार्थमेव स्वीयकथाकौशलप्रदर्शनार्थोवस्तुतस्तु तत्र तत्र स्वातन्त्र्येण निजाभ्युपेतसरण्यैव वाद्यपसारणमिति प्रेक्षावन्तोनिरीक्षन्ताम् ।

रस्य भ्रमहेतुत्वेनाध्यासे विषयसत्यत्वसिद्ध्याऽधिष्ठानसत्त्वमवर्जनीयमिति शङ्क्यम् ।

भ्रमप्रमासाधारण्येन संस्कारमात्रस्याध्यासहेतुत्वसिद्धौ प्रमाजन्यसंस्कारत्वेन कारणत्वकल्पनाया गौरवपराहतत्वात् । एवं चाध्यसनीयस्याधिष्ठानापेक्षयाऽल्पसत्ताकत्वनियमादधिकसत्ताकमधिष्ठानमपेक्षितमिति तन्निर्विशेषं ब्रह्मेत्यधिष्ठानसिद्धिरित्यप्यनिपुणभणितमनादेयम् । अधिष्ठानसत्ताया इवाधिकसत्ताकताया अप्यनपेक्षणीयतया तथा वक्तुमशक्यत्वात् । एवं चाधिष्ठानज्ञानमात्रमध्यासेऽपेक्षितं तच्च भ्रमप्रमासाधारणमिति नाधिष्ठानतया निर्विशेषब्रह्मसिद्धिः ।

एतेन "अधिष्ठानस्य ज्ञानद्वारा भ्रमाहेतुत्वेऽपि अज्ञानद्वारा भ्रमहेतुत्वेन सत्त्वनियमात् । भ्रमोपादानाज्ञानविषयो ह्यधिष्ठानमित्युच्यते । तच्च सत्यमेव । असत्यस्य सर्वस्याप्यज्ञानकल्पितत्वेनाज्ञानविषयत्वात् तदसत्यत्वे तज्ज्ञानस्य भ्रमाबाधकत्वप्रसङ्गात्। जगति भ्रमबाधव्यवस्था च न स्यात् । बाधेन हि किंचिदतत्त्वमुपदर्शयता आरोपितमतत्त्वं बाधनीयम् । उभयाध्यासे तु किं केन बाध्यते । अत एव भगवता भाष्य*कारेण "सत्यानृते मिथुनीकृत्ये'त्युक्तम्" । इत्यधिष्ठानमुद्रया ब्रह्मसाधनपरोऽद्वैतसिद्धिग्रन्थोऽप्यपास्तः । भ्रमोपादानाज्ञानविषयस्यैवाधिष्ठानत्वन विषयस्य मिथ्यात्वेन ज्ञानस्य भ्रमत्वं ज्ञानस्य भ्रमत्वेन च विषयस्य मिथ्यात्वमित्यन्योन्याश्रयग्रस्ततया असिद्धं ब्रह्मणोऽधिष्ठानत्वं सिद्धवदभिधाय अज्ञानद्वाराऽधिष्ठानस्य भ्रमहेतुत्वं चाक्लृप्तमुपकल्प्याधिष्ठा-

* अत्र भाष्यकारपदेन श्री ६ शङ्कराचार्या अभिप्रेयन्ते ।

नसत्यत्वाभिधानस्य स्वहस्तनिबद्धनिगडवदुपहासास्पदत्वात् । भ्रमोपादानाज्ञानविषयस्याधिष्ठानस्य सत्यत्वनियमोऽप्यसिद्धः शुक्तेरधिष्ठानभूतायाः सत्यत्वविरहेऽपि रूप्योपादानाज्ञानविषयत्वस्य त्वयैवोपगमात् ।

यदि तु तत्र शुक्तिरूप्यापेक्षया शुक्तेरधिकसत्ताकत्वान्न तन्नियमभङ्ग इत्यभिमन्यसे तर्हि तदप्यप्रविश्याभिधानमेव । अध्यस्तापेक्षयाऽधिष्ठानेऽन्यूनसत्ताकत्वस्यापेक्षणीयतयाऽधिष्ठानेऽधिकसत्ताया अनपेक्षणीयत्वात् । तादृशनियमस्य चाध्यस्ताधिष्ठानयोरुभयोरध्यस्तत्वेऽपि निर्वाह्यत्वात् । तत एव च ब्रह्मण्यध्यस्तेऽपि त्वन्मतसिद्धाधिष्ठानभावे शुक्त्यादौ रूप्याद्यध्यासनिर्वाहोऽन्यथा तु शुक्तिरूप्यस्य चोभयोरध्यस्ततया कथमध्यस्ताधिष्ठानभावोऽवकल्पेत ।

यच्चासत्यस्य सर्वस्याप्यज्ञानकल्पितत्वेनाज्ञानविषयत्वमुक्तं तदप्यनालोच्यैव सर्वकल्पकस्याज्ञानस्यापि कल्पितत्वाविशेषेणाज्ञानविषयत्वाभ्युपगमे तस्य तस्य पुनरज्ञानविषयत्वाङ्गीकारेऽनवस्थितकल्पनापरम्परोपनिपातापत्तेः ।

यश्चाधिष्ठानासत्यत्वेऽधिष्ठानज्ञानस्य भ्रमाबाधकत्वप्रसङ्गश्चोदितः सोऽपि निर्युक्तिक एव । न ह्यधिष्ठानज्ञानस्य बाधकत्वे अधिष्ठानस्य सत्यत्वं तन्त्रं किन्तु तज्ज्ञानस्य सर्ववादिक्लृप्तं भ्रमत्वज्ञानानास्कन्दितत्वादिकमेव तच्चाधिष्ठानस्य कल्पितत्वेऽपि संभवति । अत एव यत्र वस्तुतो रज्जुविषये सर्प-भूदलनाम्बु*धाराभ्रमपरम्परा तत्रोत्तरोत्तरेणाध्यस्तेनाप्यध्यस्तस्य पूर्वपूर्वस्य निवृत्तिरिति सार्वजनीनानुभवः ।

---

* एकैकं पूर्वपूर्वं भ्रममपसार्यापरापरभ्रमस्थले उदीच्येनाध्यस्तेनापि पूर्वापसरणमानुभविकमिति भावः ।

यदि तु सर्वतीर्थदृशां सिद्धिः स्वाभिप्रेतस्य वस्तुनः । यदभ्युपगमादेव तत्सिद्धिर्वार्यते कुतः ॥ इति सुरेश्वरवार्त्तिकोक्तरीत्या ब्रह्मणो मिथ्यात्वानुमाने जगदान्ध्यप्रसङ्ग इति ब्रह्मत्वस्य दृश्यावृत्तिधर्मत्वेऽपि न परमार्थसद्भिन्नत्वव्याप्यत्वसिद्धिरिति मन्यसे तर्हि सन्मात्रस्वरूपस्य ब्रह्मणः कुत्रापि ज्ञाने व्यवहारे चानुपयुक्तत्वात्कथं सर्वतीर्थदृशां स्वाभिमतार्थसाधकत्वप्रत्याशाऽपि । तथा हि निर्विशेषज्ञानस्वरूपस्य ब्रह्मणो ज्ञातृत्वाभावान्न प्रतिभासहेतुत्वं ज्ञातैव हि आश्रयतया प्रतिभासहेतुर्दृष्टः । ज्ञातृगतज्ञानं च व्यवहारहेतुर्भवति । स्वरूपविश्रान्तज्ञानं च न ज्ञातृगतमिति तत्कथं व्यवहारहेतुः । नापि निरधिष्ठानभ्रमासंभवेन अधिष्ठानमुद्रयैव निर्विशेषज्ञानात्मनो ब्रह्मणोऽभ्युपगम इति युज्यते । दोष–दोषाश्रयत्व–ज्ञातृत्व–ज्ञानानामपारमार्थ्येऽपि पारमार्थिकस्य भ्रमोपपत्तिवदधिष्ठानापारमार्थ्येऽपि भ्रमसंभवात् । अधिष्ठानापारमार्थ्ये क्वचिद् भ्रमो न दृष्ट इत्यधिष्ठानपारमार्थ्यमवश्यमङ्गीकरणीयमिति चेदायातोऽसि मार्गेण ।

अधिष्ठानपारमार्थ्यापेक्षणे दोष–दोषाश्रय–ज्ञातृत्व–ज्ञानानामपारमार्थ्येऽपि न क्वचिद् भ्रमो भवतीति तत्पारमार्थ्यमप्यवश्याश्रयणीयमिति क्व नाम निर्विशेषवादसंभावनाऽपि ।

यदपि* केचिदविद्याध्यासस्यानादित्वेन दोषाद्यनपेक्षावदधिष्ठानानपेक्षाऽपि स्यादित्याशङ्क्य जनकत्वेनाधिष्ठानानपेक्षायामप्याश्रयत्वेन तदपेक्षानियमात् नित्यस्यापि परममहापरिमाणादेराश्रयापेक्षावदध्यासस्य साधिष्ठानत्वनियमेनाचापि परतन्त्रत्वस्य समानत्वादित्याहुस्तदसंगतम् । दोष–तदाश्रयादीनामपारमार्थ्येऽपि

* अद्वैताचार्याः ।

यथा कल्पितैस्तैर्व्यवहारनिष्पत्तिरेवं पारमार्थिकाश्रयविरहेऽपि कल्पिताश्रयद्वारा भ्रमोपपत्तौ अधिष्ठानयाथार्थ्यानपेक्षणात् । एवं च जगदतात्त्विकत्ववादिनोमाध्यमिकचरणशरणमावश्यकमिति कृतसर्वतन्त्रविवेचनाः सुधियः ।

अथाधिष्ठानापारमार्थ्ये तस्याधिष्ठानान्तरमपेक्षितमेवं तस्यतस्येत्यनवस्थेति क्वचिद्विश्रमणीयमित्यभिधत्से तर्हि दोषापारमार्थ्येऽपि दोषान्तरमपेक्षितमिति समैवानवस्था । स्वरूपानादित्वाङ्गीकारेण दोषपरम्पराऽनवस्थापरिहारे । अधिष्ठानापारमार्थ्येऽपि सैव युक्तिरवलम्ब्यताम् । प्रवाहानादित्वपरिहारोऽपि चोभयत्र समान एव ॥

यदि प्रपञ्चदर्शनस्य स्वीयदर्शनस्य च दोषः स्वयमेव निर्वाहक इति न दोषान्तरापेक्षानिबन्धनानवस्थाप्रसङ्गशङ्काऽपि ! तर्हि अपरमार्थस्य स्वपरनिर्वाहकता कीदृशी । अपरमार्थो हि स्वाप्नगजादिर्न स्वकल्पने स्वयं प्रभवति तस्य निद्रा—धातुवैषम्यादिदोषसापेक्षत्वदर्शनात् । निरपेक्ष*स्वरूपत्वे तु स्वप्नगजादिर्न भवेदेव नरशृङ्गवदथवा भवेदेवात्मतत्त्ववन्न तु कदाचिद् भवेदिति ।

किंचापरमार्थस्य स्वपरनिर्वाहकत्वाङ्गीकारे दोषस्येवाधिष्ठानस्याप्यपरमार्थस्य स्वपरनिर्वाहकत्वव्यवस्थितौ कृतमधिष्ठानसद्भावाभ्युपगमेन ।

यदि तु ज्ञानस्य परानपेक्षसिद्धिकतया स्वतःसिद्धं तदीयं स्वरूपमेव सत्त्वं तदेव च पारमार्थिकं सत्त्वमुच्यते । तर्हि जडस्यापि पराधीनसिद्धिकतया परतःसिद्धं तदीयं स्वरूपमेव सत्त्वं तदेव च पारमार्थिकं सत्त्वमित्यपि समानमेव । न हि परानपेक्षसिद्धिकत्व—

* परनिरपेक्षस्वभावा हि अत्यन्तसन्तो दृष्टा यथाऽऽत्मानः । यद्वाऽत्यन्तासन्तो यथा नरशृङ्गखपुष्पादय इति भावः ।

परापेक्षसिद्धिकत्वाभ्यां कश्चिद्विशेषः सत्त्वलक्षणे स्वरूपे आधातुं शक्यः । यदि तु जडस्य स्वरूपविश्रान्तं सत्त्वं नापनेतुं यतामहे किन्तु त्रिकालाबाध्यत्वलक्षणं तस्य सत्त्वं न मृष्यामहे इति ब्रूध्वे ।

एवं वर्तमानकालीनजलादेरेव तृषोपशमकत्वसंभवे जलादेस्त्रैकालिकत्वाङ्गीकारो जड़मतीनामेव शोभते तर्हि विशुद्धमतिना भवता कालत्रयमपि नाभ्युपेयतामिति कालविभागव्याघात आपतितः । एवं च साधु समर्पितोऽयमन्तिमस्तिलतोयाऽञ्जलिर्वैदिकव्यवहारमात्राय युग–मन्वन्तर–कल्पादिलक्षणाय तस्य त्रैकाल्यानङ्गीकारे दुःसमर्थत्वात् ।

त्रैकाल्याभ्युपगमे तु किमधिकमपराद्धं व्यावहारिकैर्जलादिभिरेव यत्ते वर्तमानकाल एवाद्रियन्ते न पूर्वोत्तरकालयोरिति ।

यदि तु ज्ञानविश्रान्तस्वरूपं त्रैकाल्यमभ्युपेयत इति न व्यवहारानिर्वाहः । एवं तर्हि जलमपि भवता ज्ञानविश्रान्तस्वरूपमेवाभ्युपेयमिति योगाचारचरणशरणीकरणे तन्निराकरणरीत्यैव भवतोऽपि व्युदास इति वेदान्तसिद्धान्तमपहाय परसद्मानुसरतस्ते निरासे कोऽधिकायासो नः । यथा च योगाचारमतं न श्रेयस्तथा सप्रपञ्चं निरूपयिष्यामः स्वावसरे ।

एवं च स्वरूपलक्षणसत्त्वस्य सत्त्वस्वरूपत्वाङ्गीकारे असतोऽपि स्वरूपं स्वरूपमेवेति तस्यापि स्वरूपलक्षणसत्त्वेन सत्त्वप्रसङ्गः । यतः सतः सत्त्वमेव तत्त्वमसतश्चासत्त्वमेव तत्त्वमित्यकिंचिदिदमुच्यते । वस्तुतस्तु त्रिकालाबाध्यत्वलक्षणमपि सत्त्वं जडस्याङ्गीक्रियत एव । प्रतिक्षणपरिणामिनि जड़े त्रिकालाबाध्यत्वमसंभवीति तु पुनरनभिज्ञचोद्यं जड़स्य परिणामिनित्यत्वाङ्गीकारात् । प्रतिक्षणपरि-

णामोऽपि हि जड़जातस्य नाबाध्यत्वभङ्गप्रयोजकः प्रत्युत तस्याबाध्यतामेव पुष्णाति । प्रतिक्षणपरिणामस्य धर्मसत्त्वपूर्वकतया धर्मिणोऽनुगतस्य पूर्वोत्तरकालावस्थायिनः सत्त्वस्यावश्यकत्वादितरथा कस्यायं सततपरिणामो नाम धर्मोऽवकल्पेत । न ह्यसति धर्मिणि तस्य धर्म इति व्यपदेशसंभवः । उपचयापचयशालितया द्रव्यान्तरत्वं भजमाने धर्मिणि कस्य त्रिकालाबाध्यत्वलक्षणं सत्त्वं ब्रूया इति तु पुनस्त्वदीयप्रश्नभाषयैवोत्तरणीयं यस्य प्रतिक्षणपरिणामित्वमातिष्ठसे तस्येति । इतरथा प्रतिक्षणं वस्तुभेदे तावत्कालावस्थायिवस्त्वनङ्गीकारे कस्यामी उपजायमानाः परिणामाः । कश्च तैर्विपरिणमयितव्यः स्थास्नोरेकस्यानभ्युगमात् ।

या च अत एव भगवता भाष्यकारेण "सत्यानृते मिथुनीकृत्येत्युक्तमित्युक्तिस्सा स्वीयाभिनिवेशवशंवदतामेवानुवदति । अपरमार्थदोषमूलभ्रमवादिना निरधिष्ठानभ्रमासम्भवस्य पूर्वोदितप्रणाल्या दुरुपपादतया अपरमार्थभूतभ्रमहेतु—दोष—दोषाश्रयत्ववदधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः ।

यदपि निरवधिबाधाभिधानभीत्या बाधस्य सावधिकतया ब्रह्मणो निखिलबाधावधिमुद्रया सिद्धिसमर्थनं तदिदं भ्रान्तस्य महाभ्रमावलम्बनमात्रं जगद्बाधाभिधानस्य युक्तिविरुद्धत्वेन भ्रान्तिमूलकतया बाधावधिमुद्रया ब्रह्मसिद्धिसमर्थनात् । यदि नाम जगदिदमबाधिष्ट तदा बाधावधिमुद्रया असेत्सीदपि निर्विशेषं परं ब्रह्म न च तत्तथा*ऽस्तीति किं केन संगच्छतामित्यच्छमतयो मीमांसन्ताम् । यथा चेदं जगन्नाज्ञानोपादानकं नाप्यज्ञाननिवृत्तिनिवर्तनीयं

* न च जगद्बाध्यते बाधहेतोर्दुर्निरूपत्वादिति भावः ।

तथा ऽस्वावसरे साधु अबूबुधाम । बोधयिष्यामश्चाग्रे यत्त्यवशिष्टं ततोऽवधेयम् ।

तस्माद् दृश्यत्वं परमार्थसद्भिन्नत्वव्याप्यमित्यस्य ब्रह्मत्वं परमार्थसद्भिन्नत्वव्याप्यम् । दृश्यावृत्तिधर्मत्वादित्यनेनाभासेन साम्यमाशङ्कितं साधु समर्थितमिति विदाङ्कुर्वन्तु विद्वांसः ।

उभयसिद्धमसद्विलक्षणं मिथ्यात्वासमानाधिकरणधर्मानधिकरणम् । आधारत्वाच्छुक्तिरूप्यवदिति चतुर्थप्रयोगे तु बाध्यत्वमुपाधिः साध्यवत्तानिश्चयविषये शुक्तिरूप्यादौ साध्यव्यापकत्वात् । हेतुमति ब्रह्मणि बाध्यत्वविरहेण साधनाव्यापकत्वाच्च । आधा*रत्वस्य ब्रह्मणि विरहान्न साधनाव्यापकत्वमिति तु बालभाषितम् । ब्रह्मत्वं परमार्थसन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकम् । ब्रह्मवृत्तित्वादित्येवमनुमिमानेन मूलकृता । स्पष्टं कण्ठरवेण टीकाकृता भिक्षुणा च ब्रह्मण्याधारत्वस्याभ्युपगतत्वेन अनो†मिति वक्तुमशक्यत्वत् । एवं च उभयसिद्धमसद्विलक्षणम् । मिथ्यात्वासमानाधिकरणधर्माधिकरणम् । बाध्यत्वाभावादित्यनुमानेनानुमितिप्रतिबन्धादकिञ्चिदिदमिति स्पष्टं निरूपकेषु ।

एवं च ब्रह्मण्याधारताया वादिद्वयानुमततया अविवादपदत्वेन उभयसिद्धमसद्विलक्षणम् । मिथ्यात्वासमानाधिकरणधर्माधिकरणम् आधारत्वाद् ब्रह्मवदिति प्रयोगेण । अथवा उभयसिद्धमसद्विलक्षणं मिथ्यात्वानधिकरणम् । आधारत्वाद् ब्रह्मवदिति प्रतिप्रयोगेण वा सत्प्रतिपक्षताऽपि ।

---

* आधारत्वस्य सविशेषे ब्रह्मण्येवाभ्युपेयतया तत्र च मिथ्यात्वस्याप्यनुमततया निर्विशेषे चाऽऽधारत्वानभ्युपगमादकिञ्चिदिदमिति परैराशङ्कनीयमिति स्पष्टं मूले ।

† आधारत्वं ब्रह्मणि नास्तीति वक्तुमशक्यत्वादित्यर्थः ।

वस्तुतस्तु उभयमतसिद्धाधारऽ§त्ववति ब्रह्मणि मिथ्यात्वासमानाधिकरणधर्मानधिकरणत्वविरहेण व्यभिचारोऽपि स्पष्टः । किञ्च वादिना माध्वेन शुक्तिरूप्यस्य निराकरणीयतयाऽनङ्गीकृतत्वेन तदसिद्ध्या दृष्टा||न्तासिद्धिरपि । एवं च पक्षतावच्छेदककुक्षावप्युभयसिद्धत्वविशेषणमपार्थकं तद्धि शुक्तिरूप्यादावंशतः सिद्धसाधनवारणायोपादेयं न च तत्संभवि शुक्तिरूप्यस्यैवानभ्युपगमपराहतत्वात् । यथा चाधारत्वं न हेतुस्तथा पूर्वमेव सूपपादितमस्माभिरिति कृतं पल्लवैः ॥

यश्च प्रतियोग्यवच्छिन्नोदेशः—अत्यन्ताभावाश्रयः आधारत्वात्कालवत् । आत्मत्वावच्छिन्नं परमार्थसत्त्वाधिकरणप्रतियोगिकभेदत्वावच्छिन्नरहितम् । परमार्थसत्त्वात् । परमार्थसत्त्वावच्छिन्नवत् । परमार्थसति परमार्थसद्भेदाङ्गीकारवादिमतेऽपि सद्भेदो न परमार्थसत्त्ववन्निष्ठः किन्तु घटत्वाद्यवच्छिन्ननिष्ठ एव । इत्युपपादनपुरस्सरः' अद्वैतसिद्धिप्रयोगः सोऽपि प्रयोक्तुर्मिथ्याऽभिनिवेशवशंवदतामेव स्पष्टमभिव्यनक्ति । वक्ष्यमाणदूषणगणग्रस्तत्वात् । तथाहि स्वप्रतियोग्यवच्छिन्नोदेशः—अत्यन्ताभावानाश्रयः । स्वविरोधिस्वप्रतियोग्यवच्छिन्नत्वात् । सत्त्ववति ब्रह्मणि सत्त्वाभाववदिति प्रथमप्रयोगे सत्प्रतिपक्षता । किंचाधारत्वं हेतुर्न सामान्यतो घटाद्याधारत्वपर्यवसायि पूर्वोक्तरीत्या सिद्धसाधनतादिप्रसङ्गादित्यगत्या विशिष्य संबन्धविशेषा-

§ आधारत्वस्य ब्रह्मणि स्वीकारेऽपि तत्र न व्यभिचारः । धर्माधिकरणत्वाभावस्यापि मन्मते तत्र स्वीकारेण तस्य पक्षसमत्वादिति ब्रुवाणेन स्पष्टमाधारत्वमभ्युपेतमिति भावः ।

|| यथा च शुक्तिरूप्यं नाम बालव्यामोहनमन्त्रमात्रं न तु वस्तुवृत्तं किञ्चित्तत्त्वं तथा वयमिहाग्रे दृष्टान्तासिद्धिनिरूपणसमये पराक्रम्य निरूपयिष्यामः ।

वच्छिन्नत्वनियतं तत्तदाधारत्वं हेतुतया वाच्यं तथा च तदाधारत्वेन तदनाधारत्वसाधने परामर्शस्याहार्यरूपत्वेनानुमित्यजनकत्वम् ।

हेतोर्विरुद्ध*त्वं च । एवंविधसकलदोषपरिहारार्थमभावस्य पारमार्थिकत्वमवलम्ब्योत्तरवितरणं तु यथा शुद्धवञ्चनमात्रं तथा तत्र तत्रासकृदेव न्यरूपयामेति किं पुनरुक्तया । किंच स्वप्रतियोग्यवच्छिन्नेऽत्यन्ताभाववति दृष्टान्तीकृते काले .प्रतियोगि—तदभावयोरव्याप्यवृत्तित्वेन देशेऽपि प्रतियोगि—तदभावयोः कालभेदेन वादिनोऽपि तत्संप्रतिपत्त्या सिद्धसाधनम् । देशे वृत्तौ कालस्येव काले वृत्तौ देशस्याप्यवच्छेदकत्वेन घटानवच्छेदकदेशावच्छेदेन घटाभाववति काले घटवत्त्वस्येव घटानधिकरणकालावच्छेदेन घटाभाववत्त्वस्य सर्वैरङ्गीकरणीयतया किं ततस्तव सेत्स्यति ।

यदपि कश्चिदेतद्दोषपरिहाराय घटादिर्घटत्वाद्यभावस्यानवच्छिन्नाधिकरणतावानित्यर्थः । तेन घटादेः स्वनाशकालाद्यवच्छेदेन घटाद्यभाववत्त्वेऽपि न सिद्धसाधनम् । समवायादिना घटत्वादेरभावस्य दैशिकविशेषणतयाऽधिकरणत्वं निवेश्यम् । कालवदित्यस्य घटादिभिन्नकालवदित्यर्थः । तेन पक्षदृष्टान्तभेदः । वस्तुतः पक्षतावच्छेदकान्यरूपेण पक्षस्य दृष्टान्तमध्यपातेऽपि न क्षतिः । प्रत्युत कालविधया पक्षस्यापि साध्यवत्त्वेन पराभ्युपगतत्वप्रदर्शनं प्रकृतोपयुक्तम् । इत्याह । तदेतदप्यत्यन्तानवधाननिबन्धनमेवाभिधानं यतो दैशिकविशेषणतया सिषाधयिषितस्य घटादौ समवायसंबन्धावच्छिन्नप्रतियोगिताकघटत्वाद्यभावस्य सामान्यतो हेतु†मति पटादौ सिद्धतया सिद्धसाधनताप्रसङ्गः । विशिष्य तु समवा-

* एतत्सर्वं प्रसङ्गतः पूर्वं निरूपितमिति ततः संतुष्यन्तु विद्वांसः ।
† आधारत्ववति ।

येन घटत्ववति घटे विरोधादेव सा*ध्यसिद्ध्यसंभवः । इत्यादेः पूर्वोपपादितदोषगणस्य इहाप्यपरिहार्यत्वात् ।

प्रतियोग्यवच्छिन्नोद्देशः—अत्यन्ताभावाश्रय इति प्रयोगे परामर्शस्याहार्यरूपतयाऽनाहार्यपरामर्शस्यैवानुमितिजनकत्वेन । अनाहार्यपरोक्षानभ्युपगमेन प्रकृतस्थलीयानुमित्यप्रसिद्ध्या च सर्वथेदमयुक्तमिति पूर्वमेव स्वावसरेऽदूदुषामेति किमाम्रेडितेन ।

द्वितीयप्रयोगस्तु घटत्वावच्छिन्नं घटत्वाधिकरणप्रतियोगिकभेदत्वावच्छिन्नरहितम् । घटत्वात् घटत्वावच्छिन्नवदित्याभाससमानः । न हि घटत्वावच्छिन्नायां कस्यांचिदेकघटव्यक्तौ घटत्वाधिकरणापरघटव्यक्तिप्रतियोगिकभेदराहित्यं तथा सति जगति घटव्यक्तेरैक्यापानात् । तथाऽभ्युपगमे वा एकघटव्यक्तिनाशे जगदिदमघटमेवाभ्युपेयेत । यदि तु घटे घटप्रतियोगिकभेदसत्त्वेऽपि न घटत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं तर्हि सति ब्रह्मणि सत्प्रतियोगिकभेदसत्त्वेऽपि न सत्त्वावच्छिन्नप्रतियोगिताकभेदवत्त्वमित्यपि समानमेव । भेदस्य प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया समं विरोधात् । यच्च परमार्थसति परमार्थसद्भेदाङ्गीकारवादिमतेऽपि सद्भेदो न परमार्थसत्त्ववन्निष्ठः किन्तु घटत्वाद्यवच्छिन्ननिष्ठ एवेत्याहाद्वैतसिद्धिकारस्तदपि विदुषामतिचमत्कारावहम् । यतः परमार्थसति घटादौ जड़े विद्यमानः परमार्थसत्स्वरूपात्मादिप्रतियोगिकोभेदः किं न परमार्थसत्त्ववन्निष्ठः । यदि तु परमार्थसत्त्ववन्निष्ठस्यापि परमार्थसत्प्रतियोगिकात्मादिभेदस्यानुयोगितावच्छेदकं न सत्स्वरूपत्वं प्रतियोग्यवृत्तिधर्मस्यैवानुयोगितावच्छेदकत्वात् ।

* अत्रत्यचोद्य–परिहाराः पूर्वमेव निरूपिता इति ततोऽवधेयाः ।

तर्हि माभूदनुयोगितावच्छेदकं सत्स्वरूपत्वं मा च भूत् सत्त्वावच्छिन्नप्रतियोगिताको भेदः सत्त्ववति कोब्रूते तथा । तावताऽपि विवक्षितार्थस्याञ्जस्येनैव सम्भवे किमवहीयते सत्त्ववति घटादौ सद्भेदाभ्युपगमे ।

एवं च परमार्थसत्त्वावच्छिन्नघदित्यद्वैतसिद्धिग्रन्थस्य परमार्थसत्त्वावच्छिन्नप्रतियोगिताकभेदवदित्यर्थो वाच्यः । ततश्च परमार्थसत्त्वावच्छिन्नप्रतियोगिताकभेदस्य परमार्थसति वादिप्रतिवादिभ्यामनङ्गीकृतत्वेऽपि परमार्थसत्प्रतियोगिकभेदस्य परमार्थसति तावता नापलाप इत्यकिंचिदिदं प्रलापमात्रं वादिनामिति कृतावधानाः पश्यन्तु विचक्षणाः ।

वस्तुतस्तु परमार्थसत्त्वसामानाधिकरण्ये परमार्थसत्त्वव्यापकत्वेऽपि का क्षतिः । अत्यन्तासदन्यनिष्ठस्य मिथ्यात्वप्रत्यनीकस्वरूपस्य । त्रिकालाबाध्यत्वस्वरूपस्य वा अत्यन्तासदन्यत्वे सति प्रातिभा*सिकान्यत्वस्वरूपस्य वा सत्त्वस्य जड़—जीव—भगवत्साधारणस्य चिदचिच्छरीरके भगवति ब्रह्मणि वासुदेवेऽनन्तकोटिब्रह्माण्डनायके स्वीकरणीयतया दोषलेशस्याप्यनाशङ्कनीयत्वात् । त्रिकालाबाध्यत्वलक्षणं सत्त्वं दुर्ग्रहं चक्षुराद्ययोग्यत्वात् । वर्तमानकालाबाध्यत्वमात्रेणैव सर्वव्यवहारनिर्वाहे तस्यानपेक्षितत्वाच्चेति तु वादिनां दुराग्रहमात्रं वर्तमानकालाबाध्यत्वाभ्युपगमस्यैव त्रिकालाबाध्यत्वपर्यवसायित्वात् । तथा हि वर्तमानकालपदेन कश्चन स्थूलोवर्षर्तुमासायन—दिनादिलक्षणः कालो विवक्षितोऽथवा अविभागभागस्त्रुट्यादिरेव यस्याग्रे भागो दुष्कल्पः । तत्र प्रथमे वर्षादिलक्षणकालस्य पूर्वापरकालसमुदायात्मनः

* स्वमते तदसत्त्वेऽपि परमततात्पर्येण तथोक्तिरिति तत्त्वम् ।

पूर्वोत्तरकालावपहाय निर्वक्तुं दुःशकतया वर्तमानकालाबाध्यत्वमेव त्रिकालाबाध्यत्वपर्यवसायि। यदि तु घटयादिलक्षणो वर्तमानकालस्तदबाध्यत्वमेव व्यवहारेऽपेक्षितमिति ब्रूयास्तर्हि क्षणिकबाह्यार्थवादिसौत्रान्तिकचरणशरणे स्वमतविलोपः। प्रत्यभिज्ञाऽनुपपत्तिः।

अनुमानोपमानादेः प्रामाण्योत्सादश्च। अनुमानं हि दृष्टान्तमूलकं दृष्टान्तश्च हेतुमत्तया साध्यपरिच्छेदहेतुः पूर्वकालभावी न च सोऽस्ति ते क्षणिकबाह्यार्थवादिन उत्तरकाले। एवमुपमानमपि सादृश्यमूलकं न च तत्सुग्रहं क्षणिकबाह्यार्थवादे। इत्यग्रे निरूपयिष्यामः। तस्मादुचितः पदार्थानां स्थूलकालावस्थायित्वाभ्युपगमः। एवं चानिच्छताऽपि त्रिकालाबाध्यत्वमभ्युपेतम्।

त्रिकालाबाध्यत्वाङ्गीकारे पदार्थानां नित्यत्वापत्तिरिति तु पुनरतितुच्छशङ्कितं परिणामाङ्गीकारेण नित्यत्वासंभवात्। परिणामिनित्यतायाश्चेष्टापत्त्या परिहार्यत्वात्।

यदपि त्रिकालाबाध्यत्वे चक्षुराद्ययोग्यत्वमाशङ्कितं तदपि वर्तमानकालाबाध्यत्वग्रहन्यायेन समाधेयं यथा वर्तमानकालाबाध्यत्वं ग्राह्यं तथैव तदपि। यश्चोभयोरिति न्यायेन तस्योभयप्रतिविधेयत्वात्।

वर्तमानकालाबाध्यत्वमात्रग्रहेण व्यवहारनिर्वाहे त्रिकालाबाध्यत्वाङ्गीकारोऽपार्थकोऽन्यथासिद्धश्चेति तु दुर्धिषणोक्तचोद्यम्। पूर्वोपदर्शितन्यायेन वर्तमानकालाबाध्यत्वस्यैव त्रिकालाबाध्यत्वपर्यवसायित्वात्।

त्वयाऽपि च सत्ताद्वैविध्यमनुमन्यमानेन बलवता प्रयत्नेन द्वैविध्यमुपपादयता व्यवहारातिरिक्तकालेऽपि सत्ताऽङ्गीकारेण वर्त

मानकालातिरिक्तकालेऽपि पदार्थसत्तायाः स्वयमङ्गीकृततया तदन्यथासिद्धेर्दुर्वचत्वाच्च । एतदधिकृत्यास्माभिः पूर्वमपि किञ्चिन्निरूपितमवशिष्टं च भगवद्विभूत्युपसंहारप्रकरणे निरूपयिष्याम इति ततोऽवधारयन्तु सन्तः ।

यच्च के*चिद् विमतं मिथ्या । मोक्षहेतुज्ञानाविषयत्वे सत्यसदन्यत्वात् । शुक्तिरूप्यवत् । मोक्षहेतुज्ञानविषयत्वं परमार्थसत्त्वव्यापकम् । परमार्थसत्त्वसमानाधिकरणत्वात् । पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्ववदिति प्रयोगद्वयमारचयाञ्चक्रुः । अत्र प्रथमन्याये हेतुशरीरे सत्यन्तानुक्तौ असदन्यत्वस्य ब्रह्मण्यपि सत्त्वाद् व्यभिचारवारणाय मोक्षहेतुज्ञानाविषयत्वमुक्तम् । तावन्मात्रोक्तौ चात्यन्तासति खपुष्पादौ व्यभिचार इत्यसदन्यत्वमुपात्तम् ।

द्वितीयन्याये हेतुशरीरे यद्यपि परमार्थसत्त्वस्यैव तादात्म्येन हेतुत्वसंभवादधिकांशवैयर्थ्यमिति प्राप्नोति तथाऽपि नव्यनये धूमप्रागभा†वस्य यथा हेतुत्वसंरक्षणं तथैव प्रकृतेऽपीति न व्याप्यत्वासिद्धिशङ्कावसरः । न च तावताऽपि मोक्षहेतुज्ञानविषयत्वे परमार्थसत्त्वसमानाधिकरणत्वरूपहेतुविरहात्स्वरूपासिद्धिरिति शङ्क्यम् । अबाध्यत्वव्यापकयत्किञ्चिद्धीविषयत्वस्यैव परमार्थसत्त्वरूपत्वेन तस्यैव च पक्षत्वेनाभिमततया स्वरूपासिद्ध्यनवकाशादिति चाभिप्रयन्ति ।

तदेतत्स्वसिद्धान्ताभिनिवेशमात्रनिबन्धनमभिधानम् । तथा हि प्रथमप्रयोगे मिथ्यात्वप्रकारकनिश्चयविषयीभूते शुक्तिरूप्यादौ

---

* अद्वैतसिद्धिकाराः

† प्रकृतसाध्यव्याप्यताऽवच्छेदकस्वसमानाधिकरणविशिष्टान्तरघटितत्वं हि व्यर्थविशेषणघटितत्वमिति भावः ।

योगिज्ञानाविषयत्वस्य बाध्यस्य प्रमाणागम्यत्वस्य सद्विविक्तत्वस्य दोषजन्यत्वस्य च सत्त्वात्साध्यव्यापकत्वं साधनाधिकरणे घटादौ च तदसत्त्वात्साधनाव्यापकत्वमिति ते उपाधयो भवन्तीति तत्तदुपाध्यभावेन साध्याभावोन्नयनादकिञ्चिदिदम् ।

किञ्च मोक्षहेतुज्ञानाविषयत्वे सत्यसदन्यत्वं पञ्चमप्रकाराविद्यानिवृत्तौ तत्र तु मिथ्यात्वं नास्तीति व्यभिचारोऽपि व्यभिचारवारणाय यदि बन्धकालीनत्वमुच्यते तदाऽसदन्यत्वं व्यर्थमसति खपुष्पादौ कालसंबन्धित्वविरहादेव व्यभिचारपरिहारसंभवादित्यादिको दोषगणः प्रविश्य दोषज्ञैः स्वयमनुसंधेयः ।

द्वितीयप्रयोगे तु कीदृशी व्याप्तिरिति चिन्त्यते तत्र यदि सामान्यतो यद् यत्समानाधिकरणं तत् तद्व्यापकमित्युच्यते तदा नीलत्वं भवति घटत्वसमानाधिकरणं न च तत्तद्व्यापकमिति न तत्सामानाधिकरण्यमात्रे व्यापकत्वानुमापकतासंभवः । एवं च परमार्थसत्त्वसामानाधिकरण्येन मोक्षहेतुज्ञानविषयत्वे कथं परमार्थसत्त्वव्यापकतासिद्धिस्तत्सामानाधिकरण्यमात्रस्य व्यापकत्वव्यभिचारित्वात् ।

यदि तु ब्रह्मण्येव पारमार्थिकं सत्त्वमितरत्र तु तन्नास्तीति सामान्यमुखव्याप्तेरसत्त्वेऽपि ब्रह्मणि सत्त्वसामानाधिकरण्यं भवति सत्त्वव्यापकमिति को चोद्यपरिहारावित्युच्यते । एवं तर्हि ब्रह्मण्येव पारमार्थिकं सत्त्वमितरत्र च न तदिति स्वमतं कथमप्रसाध्य सिद्धवदभिधत्से । अन्यथा स्पर्शवत्त्वं द्रव्यत्वव्यापकम् । द्रव्यत्वसमानाधिकरणत्वात्पार्थिवस्पर्शवदित्यप्यनुमानमनाभासं स्यादिति किं भूरिभणितेन ।

किंच यच्च यच्च परमार्थसत्त्वसामानाधिकरण्यं तच्च तच्च परमार्थसत्त्वव्यापकत्वमिति व्याप्तिं प्रत्यक्षतोऽवधारयसि अथवा प्रमाणान्तरेण तत्र वर्तमानमात्रार्थग्राहिणा प्रत्यक्षेण त्रिकालाबाध्यत्वघटितपारमार्थिकसत्त्वसामानाधिकरण्यव्यापकता सर्वथा दुर्ग्रहेति न प्रत्यक्षतोऽवधारणसंभवः । नाप्यनुमानेन तादृशव्याप्तिग्राहकान्वय--व्यतिरेकसहचारयोर्दुर्निरूपत्वात् ।

नाप्युपमानेन तस्य सङ्केतमात्रपरिच्छेदहेतुतायाः परीक्षकैर्व्यवस्थापितत्वात् ।

नाप्यर्थापत्त्यनुपलब्धी ब्रह्ममात्रसत्त्वसाधिकयोस्तयोरनवतारादित्यग्रे विस्तरेण निरूपयिष्यामः । शब्दस्य तु यच्च यत्सामानाधिकरण्यं तच्च तद्व्यापकत्वमिति बाधितार्थबोधकतया प्रामाण्यसंभव एव कुतः । शब्दस्याप्यबाधितार्थबोधकत्वेनैव प्रामाण्यात् । तस्मान्मोक्षहेतुज्ञानविषयत्वं परमार्थसत्त्वव्यापकम् । परमार्थसत्त्वसमानाधिकरणत्वात् । पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्ववदित्यनुमानं सर्वथाऽऽभासमात्रम् ।

यदपि शुक्तिरूप्यं मिथ्यात्वेन प्रपञ्चान्न भिद्यते । व्यवहारविषयत्वाद् ब्रह्मवदिति । साध्यसत्त्वमत्र त्रेधा स्वस्याभिथ्यात्वेनोभयोर्मिथ्यात्वेनोभयोरमिथ्यात्वेन वा । तत्रान्तिपक्षस्यासंभवात्पक्षे साध्यसिद्धिपर्यवसानं मध्यमपक्षेण । दृष्टान्ते तु प्रथमपक्षेणेति विवेक इत्यद्वैतसिद्धिकाराः पूर्वोदितन्यायप्रयोगानुष्ठानपुरःसरमाहुस्तत्त्वेन्द्रजालिकस्य बालवञ्चनार्थं स्वपाणौ सर्षपारोपणप्रयत्नप्रायं यतो हेतुशरीरप्रविष्टव्यवहारविषयत्वं किं घटादिसाधारणव्यवहारविषयत्वं किं वा स्फुरणलक्षणव्यवहारविषयत्वमुत स्फुरणाभिवदनसाधारणव्यवहारविषयत्वं

तच घटादिसाधारणव्यवहारविषयत्वाङ्गीकारे साधनवैकल्यं दृष्टान्ते ब्रह्मणि विनाशित्व-परिणामित्वादिलक्षणघटसाधारणव्यवहारविषयत्वविरहात् । द्वितीये तु स्फुरणमेव व्यवहारोऽथवा स्फुरणविषयत्वव्यवहारः । तत्र प्रथमे स्वरूपासिद्धिः पक्षीभूते शुक्तिरूप्ये स्फुरणविषयत्वेऽपि स्फुरणरूपत्वविरहात् ।

स्फुरणविषयत्वव्यवहारस्य तु शुक्तिरूप्ये सत्त्वेऽपि दृष्टान्ते शुद्धब्रह्मण्यसत्त्वात्साधनवैकल्यं शबलस्य तु दृष्टान्तत्वे तस्य मिथ्यात्वमपीष्टमिति दृष्टान्ते ब्रह्मणि साध्यसिद्धिपर्यवसानं स्वस्यामिथ्यात्वमभ्युपेत्य प्रथमपक्षेणेति त्वदुक्तिरेवोपरुध्येत ।

स्फुरणाभिवदनसाधारणव्यवहारविषयत्वं तत्त्वमिति तृतीयपक्षे तु तदुभयसाधारणव्यवहारविषयत्वे जात्यखण्डोपाध्यादिस्वरूपानुगमकधर्मविरहेण उभयसाधारण्ये मानानवतार एव ।

किंचोभयसाधारण्याङ्गीकारे प्रपञ्चः सत्यो व्यवहारविषयत्वाद् ब्रह्मवदिति प्रपञ्चसत्यत्वसाध्यकानुमानावतारे प्रपञ्चमिथ्यात्वसाध्यकानुमानमनवकाशमेव ।

यदि तु प्रपञ्चमध्यपातिनः शुक्तिरूप्यस्य सत्यताया दुर्वचतया बाधेन प्रपञ्चसत्त्वसाध्यकानुमानमनवकाशमित्युच्यते तदा को ब्रूतेऽवच्छेदकावच्छेदेन सत्त्वसाध्यकानुमितिर्भवतीति किन्तु सामानाधिकरण्येन तत्र च सामानाधिकरण्येनावतीर्णोऽपि बाधनिश्चयोभवत्यकिंचित्कर इत्यतिफल्गुविषये किमु केसरिविक्रान्तेन ।

दोषाजन्यत्वेन वा भागवतं यत्सत्त्वप्रकारकज्ञानं तद्विषयत्वेन वा प्रपञ्चो विशेषणीयस्तस्मात्त्वा न बाधः । दोषाजन्यत्वं प्रपञ्चेऽसिद्धमिति वदतस्तु प्रपञ्चे दोषजन्यत्वमपि दुस्साधं दोषज-

न्यत्वस्यापि दोषजन्यत्वेन दुःसाधतया स्वयमलब्धात्मकत्वात् । दोषजन्यत्वं दोषजन्यं भवदपि प्रपञ्चमात्रे दोषजन्यत्वं यदि ग्राह्येत्तर्हि सर्वस्यापि दोषजन्यत्वेन दोषत्वादोषत्वव्यवस्थैवोच्छिद्येत । नापि भ्रमप्रमाजनकत्वाभ्यां दोषत्वादोषत्वे सुव्यवस्थाने स्वतःप्रामाण्यवादिभिस्तथाऽनङ्गीकारात् । अङ्गीकारेऽपि वा भ्रमप्रमयोरेव दुर्वचत्वात् । व्यधिकरणप्रकारकत्व—समानाधिकरणप्रकारकत्वाभ्यामेव भ्रमप्रमे व्यवस्थेये इत्यपि वाचनिकं साहसमात्रं तयोरेव दुर्निरूपत्वात् । बाधाबाधाभ्यामेव व्यधिकरणप्रकारकत्वसमानाधिकरणप्रकारकत्वे सुग्रहे इत्यप्यनिपुणगणरमणीयमुत्तरं प्रपञ्चमात्रस्य दोषजन्यतामास्थायुक्तस्य बाधाबाधयोरपि दुर्निरूपत्वेन येन ज्ञानेन बाधाबाधौ व्यवस्थाप्यौ तस्यापि प्रपञ्चान्तर्गततया दोषजन्यत्वेनाप्रामाण्यज्ञानास्कन्दिततया बाधाबाधव्यवस्थाहेतुत्वासंभवात् ।

निस्साक्षिकयोस्तु तयोरर्थव्यवस्थापकत्वाङ्गीकारे शून्यवादिन एव विजयेरन्नित्यनुपदमेव स्फुटीभविष्यति ।

किं च बाधाबाधौ किंचित्कालावच्छेदेन वा सर्वकालावच्छेदेन वा सर्वपुरुषसाधारण्येन वा कस्यचिदेव पुरुषस्य बाधाबाधौ वाऽर्थव्यवस्थापकावुच्येते । तत्र प्रथमे किंचित्कालमबाध्यत्वेनाभिमतस्याप्युत्तरकालं बाध्यत्वेनावगमादबाध्यत्वेनाभिमतस्यापि च बाध्यत्वेन भानान्न तौ तथाभूतावर्थतत्त्वव्यवस्थापकौ ।

सर्वकालावच्छेदेन बाधाबाधयोस्तु असर्वज्ञेन ज्ञातुमशक्यतया सुदूरोत्सारिताऽर्थव्यवस्थापकता ।

सर्वपुरुषसाधारणयोरपि तयोरयोगिनो दुरूहतया न व्यवहारहेतुत्वं परबुद्धेरप्रत्यक्षत्वेन परेण दुर्ज्ञानत्वात् । चरमपक्षे तु कस्यचिदुदितौ बाधाबाधौ नार्थतत्त्वं व्यवस्थापयतो भ्रमसाधारण्ये-

नापि तयोरुदयसंभवात्। भ्रमाविषययोर्बाधाबाधयोरर्थतत्त्वव्यवस्थापकत्वोक्तौ तु पूर्वोक्तरीत्या भ्रमाविषयत्वस्यैव युगसहस्रेणापि दुर्ज्ञानतया कथमर्थतत्त्वव्यवस्थापकतासंभवोऽपि। तस्मात्सुष्ठूक्तं दोषाजन्यत्वेन वा भागवतं यत्सत्त्वप्रकारकं ज्ञानं तद्विषयत्वेन वा प्रपञ्चोविशेषणीय इति।

गौड़ब्र*ह्मानन्दोक्तरीत्या व्यवहारपदार्थाविवक्षणे तु विषयत्वमात्रमाधारत्वादेरिव निरूपकांशे नित्यसाकाङ्क्षमिति न तन्मात्रं हेतुः। विषयत्वमात्रस्य कथंचिद्विवक्षणे वा विषयत्वस्य वस्तुत्वादितुल्यत्वमिति किं तदस्ति पक्षदृष्टान्तसाधारणं वस्तुत्वमिति निर्ब्रूहि। तत्र यदि पदशक्यत्वरूपं पदार्थत्वं तत्, तर्हि तच्छुक्तिरूप्यप्रपञ्चसाधारणमपि न शुद्धे ब्रह्मणि त्वयाऽनङ्गीकृतत्वादेव शबलस्य तु यथा न दृष्टान्तत्वं तथाऽर्वागेवाभिहितमित्याम्रेडनमात्रम्।

वस्तुत्वं प्रमेयत्वं चेत् तदपि सर्वथाऽविषयस्वरूपे ब्रह्मणि न वर्तत इति न तस्य पक्षदृष्टान्तसाधारण्यम्। कालसंबन्धित्वं वा भगवदीयज्ञानविषयत्वं वा न हेतुशरीरप्रविष्टविषयत्वं ब्रह्मण्यवृत्तित्वादेव।

यदि विषयत्वं वस्तु†त्वं तदा तदपि न शुद्धब्रह्मसाधारणम्। अत्यन्तासदन्यत्वं तु पक्षदृष्टान्तोभयसाधारणं भवदपि सोपाधिकत्वादेवाप्रयोजकमिति मर्ममनीषितं कृतधियाम्।

वस्तुतस्तु शुक्तिरूप्यस्य‡ वादिना माध्वेन निरसनीयतयाऽनभ्युपगमपराहतत्वान्न तदादाय बाधशङ्काऽपीत्यवहितैर्विज्ञेयम्।

यदि तु व्यवहारपदार्थविवक्षणपक्षे विषयत्वं वृत्तिव्याप्यत्व—

* परमप्रकृतमनुसरति
† जगद्ब्रह्मसाधारणस्य वस्तुत्वस्य दुर्वचत्वादिति भावः।
‡ प्रकारान्तरेण शुक्तिरूप्यमादाय पूर्वचोदितं बाधमुद्धरति।

फलव्याप्यत्वोभयसाधारणं विवक्ष्यते तत्र यद्यपि नोभयसाधारणं किंचिदेकं विषयत्वमिति पूर्वोक्तदोषतादवस्थ्यमिति प्राप्नोति तथाऽपि वृत्तिव्याप्यत्व–फलव्याप्यत्वान्यतरत्वे तात्पर्यमित्युच्यते तदा निर्विशेषत्वं चैतन्यरूपत्वमानन्दरूपत्वं चोपाधिः । साध्यवत्तानिश्चयविषये दृष्टान्तभूतब्रह्मणि निर्विशेषत्वादेः सत्त्वेन साध्यव्यापकत्वात् साधनाधिकरणे घटादौ च निर्विशेषस्वरूपत्वादेरभावेन साधनाव्यापकत्वाच्च ।

वादिना दृष्टान्ते ब्रह्मणि विषयत्वस्य सविशेषब्रह्मवादितयाऽभ्युपेतव्यत्वेन तत्सिद्धान्तमात्रसिद्धदृष्टान्ताभिधानस्यापि कथकसंप्रदायसिद्धतया तद्रीत्या ब्रह्मणो दृष्टान्तत्वानुसरणमद्वैतसिद्धिकृतामिति तु विद्वत्परिषत्सु परमहासास्पदं सर्वकथामूलस्य सविशेषब्रह्मवादस्याभ्युपगमे कथावतारासंभवात् । अनभ्युपगमे तु स्वस्य लौकिकपरीक्षकोभयबहिष्कारप्रसङ्गः । ब्रह्मणो दृष्टान्तत्वविरहो वा लौकिकपरीक्षकाभ्युपगतस्यैव दृष्टान्तत्वात् ।

एकमात्राभ्युपेतस्य दृष्टान्तत्वानुसरणं तु कथकैरुदासीनविषयेऽभ्युपेयते न तु सर्वकथास्तम्भस्वरूपे विषये इत्यवहिता विदाङ्कुर्वन्तु ।

एवं च साध्यं पक्षावृत्ति सोपाधिकत्वव्याप्यत्वादित्यादिरीत्या स्थापनानुमानप्रतिबन्धादकिंचिदिदमिति कृतधियः ॥

एतेन यदपि केश्चि*देतत्प्रयोगानुपालनार्थं–मिथ्यात्वहेतुकस्य प्रपञ्चभेदवत्त्वस्याभावादित्यर्थः । तादृशभेदवत्त्वञ्च प्रपञ्चभेदव्याप्यमिथ्यात्वप्रकारकस्वविशेष्यकप्रमाजन्यानुमितिविषयस्य प्रपञ्च-

* यद्यपि साध्यशरीरशोधनमेव प्रथमतः प्राप्तं तथाऽपि व्युत्पादनसौकर्याय व्युत्क्रमानुसरणमिति ध्येयम् ।

भेदस्याश्रयत्वम् । यथोक्ताश्रयत्वं स्थाप्यं स स्वपदार्थः । निर्धूमवान् धूमेन वन्हिमानयमिति वाक्यजन्यज्ञानं न प्रमा । अतः प्रमाघटितमेव हेतुत्वं तृतीयादिविभक्त्यर्थः । तथा च मिथ्यात्वे प्रपञ्चभेदव्याप्तेरबाधितत्वलाभात् मिथ्यात्वव्यापकं यन्मिथ्यात्वसमानाधिकरणं तत्त्वेन रूपेण प्रपञ्चभेदस्यात्यन्ताभावः पर्यवसितसाध्यम् । मन्मते तादृशरूपविशिष्टस्य प्रपञ्चभेदस्याप्रसिद्धावपि घटत्वेन पटस्येवोक्तरूपेणोक्तभेदस्याभावो नाप्रसिद्धः । व्यवहारेत्यविवक्षितः । स्वस्येति । यत्र साध्यं स्थाप्यं तस्येत्यर्थः । उभयोरिति । तस्य प्रपञ्चस्य चेत्यर्थः । अन्तिमपक्षस्येति । आद्यपक्षस्यासम्भवेनेत्यादिः । तेनाद्यपक्षसम्भवानुक्त्या न न्यूनता । परमतेऽपि पक्षे मिथ्यात्वस्वीकारात् तत्राद्यान्त्यपक्षयोरसम्भवः । तयोः सम्भवे तु प्रपञ्चभिन्नेऽपि पक्षे उक्तविशिष्टरूपेण प्रपञ्चभेदस्याभावसम्भवः । मिथ्यात्वसमानाधिकरणत्वरूपविशेषणाभावादिति भावः । मध्यमेति । मिथ्यात्वसमानाधिकरणत्वविशिष्टस्य प्रपञ्चभेदस्याश्रये ऽपि पक्षे उक्तविशिष्टरूपेण न प्रपञ्चभेदः प्रपञ्चभेदे मिथ्यात्वव्यापकत्वरूपविशेषणाभावात् । प्रपञ्चः सत्यः पक्षो मिथ्येति स्वीकारे तूक्तविशिष्टरूपेण पक्षे प्रपञ्चभेदस्य सत्त्वान्न साध्यपर्यवसानम् । अत एव स्वस्य मिथ्यात्वं प्रपञ्चस्य सत्यत्वमिति पक्षः साध्यपर्यवसानानुपयुक्तत्वात् पूर्वं न विकल्पित इति भावः । प्रथमेति । दृष्टान्तस्योभयसम्मतत्वापेक्षणे मन्मतेऽप्यन्त्यपक्षस्यासम्भवादुभयमतेऽपि मध्यमपक्षासम्भवात् प्रथमपक्षेणैव तत्र साध्यसिद्धिः । दृष्टान्तस्य प्रतिवादिमात्रसम्मतत्वापेक्षणे तु चरमपक्षेणापि तत्र साध्यसम्भव इति प्रथम इव चरमेऽपि मिथ्यात्वसामानाधिकरण्यरूपविशेषणाभावादुक्तरूपेणाभावस्य सम्भवादिति ध्येयमित्यन्तमुक्तं तदपि परास्तम् ।

यतो दृष्टान्तपक्षसाधारण्येन साध्यसाधनं भवति यथा पर्वतमहानससाधारणो वन्हिः पर्वतेऽनुमीयते। न हि भवति न्यायः—पर्वतोनीलवन्हिमान् यथा महानसमित्यादिघटितः । नीलवन्हित्वावच्छिन्नस्य महानसेऽसत्त्वात् किन्तु पर्वतोवन्हिमान् यथा महानसमित्यादिरूप एव शुद्धवन्हित्वावच्छिन्नस्य पर्वत—महानसोभयसाधारण्यात् ।

अत एव तु साध्यसाधर्म्याद् तद्धर्मभावी दृष्टान्त उदाहरणमित्याह स्म सूत्र*कारः साध्येन साधर्म्यं समानधर्मता साध्यसाधर्म्यात्कारणात्तद्धर्मभावी दृष्टान्त इतीत्याह च तत्सूत्रं विवृण्वानो भगवान् वात्स्यायनोऽपि ।

एवं च दृष्टान्ते ब्रह्मणि विशिष्टसाध्यसिद्धिरमिथ्यात्वसिद्धिफला पक्षे तु शुक्तिरूप्येऽमिथ्यात्वबाधात्पक्षप्रपञ्चयोरुभयोर्मिथ्यात्वसिद्धिफलाऽनुमितिर्भवतीत्यद्वैतसिद्धिकृदभिधानं कीदृशमित्यालोचयन्तु विपश्चितः । येन रूपेण दृष्टान्ते साध्यसिद्धिस्तेनैव रूपेण पक्षेऽप्यनुमितेरावश्यकत्वादन्यथा पर्वतो नीलवन्हिमान् धूमात् यथा महानसमित्यादिरप्यापद्येत न्याय इत्युक्तमेवावर्तते । दृष्टान्ते वन्हित्वेन विद्यमानस्यापि वन्हेः पर्वते नीलवन्हित्वावच्छिन्नसिद्धिफलकत्वापातादित्यनुध्यायतां निपुणैः ।

यदि तु इतरविशेष—बाधनिश्चयलाघवज्ञानादिसहकारवशाद् व्यापकतानवच्छेदकीभूतधर्मावच्छिन्नविधेयताकानुमितेः प्रामाणिकैरभ्युपगमेन यथा महानसीयवन्हीतरवन्ह्यभाववान् पर्वत इत्याकारकबाधनिश्चयसहकाराद् वन्हिव्याप्यधूमवान् पर्वत इति

* महर्षिर्गौतमः ।

परामर्शोऽपि महानसीयवन्ह्यनुमितिफलकः । तत्र महानसीयत्वं प्रकारतावच्छेदकतया भासते । अथवा केवलं विधेयतावच्छेदकतयैव भासते तद्धर्मावच्छिन्नविधेयताकानुमितित्वावच्छिन्नं प्रति तद्धर्मे व्यापकतावच्छेदकत्वग्रहस्य कारणत्वात् । अथवा न प्रकारतावच्छेदकमुद्रया न वा विधेयतावच्छेदकमुद्रया महानसीयत्वं भासते किन्तु वन्हित्वेन भासमानो वन्हिस्तत्र महानसीयो वन्हिरित्यप्येके । इत्येवमस्त्यनुभवे अनूचानानामपि विसंवादस्तथा ऽपि फलेऽविप्रतिपत्त्या यथा दृष्टान्ते महानसगोष्ठादौ वन्हित्वेन सिध्यतोऽपि वन्हेः पर्वते महानसीयवन्ह्यनुमितिफलकत्वमेवमिह दृष्टान्ते ब्रह्मणि अमिथ्यात्वसिद्धिफलकस्यापि तस्येतरबाधनिश्चयसहकारात्पक्षे प्रपञ्चसाधारण्येन मिथ्यात्वसिद्धिफलकत्वमित्यत्रधाय निरूपयसि तदा सामान्यरूपेण साध्यतास्थले बाधनिश्चयादिसहकारवशाद् भवतु तत्सामान्यघटितविशेषरूपेणानुमितिर्यथा वन्हित्वावच्छिन्नसाध्यकस्थले महानसीयवन्ह्यनुमितिः ।

यथा वा महानसीयवन्हित्वावच्छिन्नसाध्यके बाधनिश्चय— लाघवज्ञानादिसहकारेण शुद्धवन्ह्यनुमितिः सामान्यरूपेण साध्यतास्थले विशेषरूपेणेव विशेषरूपेण महानसीयवन्हित्वादिना साध्यतास्थले स्वघटकसामान्यरूपेणाप्यनुमितेः पर्यवसानस्य न्याय्यत्वात्। तद्यथा पर्वतो महानसीयवन्हिमान्। धूमात् । यो यो धूमवान् स वन्हिमान् यथा महानसमित्यादिघटितन्याये पूर्वोक्तरीत्या शुद्धवन्हिविधेयकत्वसम्भवस्तथा पर्वतो वन्हिमान् धूमात् । योयो धूमवान् स वन्हिमान् यथा महाह्रद इत्यादिघटितस्य न न्यायत्वसम्भवः । पक्षदृष्टान्तयोः साधर्म्यवैधुर्येण वन्हित्वावच्छिन्नसाध्यकस्थले वन्ह्यभाववद्ध्रदस्य दृष्टान्तभावासम्भवात् ।

एवं च प्रकृतेऽपि शुक्तिरूप्यं मिथ्यात्वेन प्रपञ्चान्न भिद्यते व्यवहारविषयत्वाद् ब्रह्मवदित्यादिघटितो न्यायः कथमवतरेत्तस्य दृष्टान्तेऽमिथ्यात्वसिद्धिफलकस्य पक्षे शुक्तिरूप्ये प्रपञ्चे च मिथ्यात्वसिद्धिफलकत्वासम्भवात् । यदि दृष्टान्तेऽमिथ्यात्वसिद्धिफलकस्यापि पक्षे मिथ्यात्वसिद्धिफलकत्वे न्यायावतारस्तदा किमवहीयते पर्वतो वन्हिमान् धूमाद् योयोधूमवान् स वन्हिमान् यथा महाह्रद इत्यादिघटितस्य न्यायत्वे । यदि तत्र धूमोह्रदावृत्तिस्तर्हि किं व्यवहारविषयत्वं शुद्धब्रह्मवृत्ति ।

यदि फलव्याप्यत्व—वृत्तिव्याप्यत्वान्यतरवत्त्वं तत्र हेतुत्वेन विवक्ष्यते इति न तस्य ब्रह्मावृत्तित्वं तर्हि पर्वतो वन्हिमान् धूमजलान्यतरस्मात् । योयोऽन्यतरवान् स साध्यवान् यथा महाह्रद इत्यादेर्न्यायत्वं पुनरपि दुर्वारम् । यदि धूमस्यैव हेतुत्वसम्भवेऽन्यतरवत्त्वं व्याप्यत्वासिद्धं तर्हि फलव्याप्यत्व—वृत्तिव्याप्यत्वान्यतरवत्त्वमपि तथा । यदि दृष्टान्ते ब्रह्मणि हेतुमत्त्वसंरक्षणार्थं तत्रान्यतरत्त्वं तर्हीहापि दृष्टान्तीकृतह्रदसाधारण्यरक्षणार्थमन्यतरवत्त्वानुधावनं सफलमवेहि । वस्तुतस्त्वन्यतरत्वघटकाभावस्याखण्डत्वेनान्यतरवत्त्वस्य हेतुस्थले व्याप्यत्वासिद्धिशङ्कैव नोदेतीत्यवहितेकावधेयम् ।

यदि तु भिक्षूक्तरीत्या प्रपञ्चभेदव्याप्यमिथ्यात्वप्रकारकस्वविशेष्यकप्रमाजन्यानुमितिविषयस्य प्रपञ्चभेदस्याश्रयत्वं विशिष्टं सिषाधयिषितं तदेव चैकरूपं सदपि सहकारिसमवधानेन दृष्टान्तपक्षादिभेदेन विभिन्नरूपतया पर्यवस्यतीति किं ते चित्रमिति ब्रुवाणश्चातुरीमारचयसि तदा विशिष्टरूपस्य साध्यस्यैक्यपदेन किं शब्दैक्यमभिप्रैषि । आहोस्विदर्थैक्यमिति विस्पष्टय । तत्र न्यायप्रयोगे

शब्दैक्यमकिंचित्करम् । अन्यथा विष्णुभेकयोरुभयोर्हरिपदवाच्यत्वेन हरिर्दुःखहारकोहरित्वात् । भगवद्वासुदेववदित्यपि स्यान्न्यायः । अत एव तु विमता बन्धनिवृत्तिः स्वप्रतियोगिविषयविषयकज्ञाना-बाध्यानात्मसमानकालीना । उक्तज्ञानाबाध्यभावरूपानात्मसमान-कालीना वा । बन्धनिवृत्तित्वात् । निगड़बन्धनिवृत्तिवदिति माध्वानुमाने भवतैव शब्दैक्यसत्त्वेऽपि बन्धपदार्थस्य निगड़बन्ध-सांसारिकबन्धसाधारण्यविरहेण पक्ष-दृष्टान्तयोर्बन्धपदार्थभेदेन स्वरूपासिद्धि-साधनवैकल्यान्यतरापातश्चोदितः । यदि तु पदैक्यं तन्त्रमभविष्यन्नाभविष्यदिह ते निरुक्तानुमाननिराकरणप्रयत्नमात्रम-पीति प्रव्यक्तमेव ।

अर्थैक्यं तन्त्रमित्युक्तौ तु प्रकृते दृष्टान्ते ब्रह्मणि साध्यसि-द्धेरमिथ्यात्वसिद्धिफलकत्वमितरत्र च मिथ्यात्वानुमापकत्वमिति सुस्पष्टोऽर्थभेद इत्यसकृदुपापीपदामेति किमु अस्थाने विक्रमक्र-मेण । किंच प्रपञ्चः सत्यत्वेन ब्रह्मणो न भिद्यते व्यवहारविषय-त्वात् ब्रह्मवदित्यनुमानेन त्वदुक्तानुमानप्रतिरूपकेण प्रपञ्चसत्यत्व-सिद्धिरवर्जनीयैव ।

तत्र च प्रपञ्चे ब्रह्मसाधारणसत्त्वसिद्धौ मिथ्यात्वानुमिति-प्रतिबन्धोयुक्त एव न चैतदनुमानेन प्रपञ्चब्रह्मणोरुभयोस्सत्त्वसिद्धौ प्रतीत्यननुगमः ।

एकसत्त्वे चापरस्य मिथ्यात्वमिति प्रपञ्चमिथ्यात्वं तद-वस्थं ब्रह्मणोमिथ्यात्वं प्रपञ्चस्य सत्यत्वमिति वैपरीत्यं तु अश-क्यशङ्कमेव स्वप्रकाशरूपस्य तस्यापलपितुमशक्यत्वादिति चेन्न यतः शुक्तिरूप्यप्रपञ्चयोर्मिथ्यात्वमामनतो भवतोऽपि मिथ्यात्वे

उभयसाधारणे कथं प्रतीत्यनुगमः । ज्ञानबाध्यत्वादिनोभयसाधारणधर्मेण तदनुगमश्चेत् । तर्हि ज्ञानबाध्यत्वाभावादिना प्रपञ्चब्रह्मणोरिहापि सत्त्वप्रतीत्यनुगममवेहि । ज्ञानबाध्यत्वस्य साधारण्ये तदभावरूपस्य सत्त्वस्याननुगमवार्ताऽपि न संभवतीति तु सुस्पष्टमिति न बहूपपादनमर्हति । ज्ञानबाध्यत्वाभावो भवत्यलीकसाधारण इति स कथं सत्त्वस्वरूपतामर्हेदिति तु क्षुद्रतमं कालसंबन्धित्वे सति ज्ञानबाध्यत्वाभावस्यैव सत्त्वपदार्थत्वेन । अलीके कालसंबन्धित्वविरहेणैव दोषानवकाशात् ।

न चैतादृशसत्त्वस्य प्रत्यक्षायोग्यज्ञानकालादिघटितत्वेन घटादिसाधारणी प्रात्यक्षिकसत्त्वप्रतीतिः कथमिति तु बालिशैकचोद्यं त्रिकालाबाध्यत्वलक्षणसत्त्वस्यापि असर्वज्ञदुर्ज्ञानतयोभयप्रतिविधेयत्वात् ।

न च सत्त्वस्य ज्ञानबाध्यत्वाद्यभावरूपत्वे प्रतियोग्यनुपस्थितिकाले सत्त्वप्रत्यक्षानुपपत्तिरिति वाच्यम् । तार्किकमते तमसस्तेजोऽभावरूपत्वेऽपि तमस्त्वेन तत्प्रत्यक्षे तेजोज्ञानानपेक्षावदिह स्वरूपत एव प्रत्यक्षसंभवात् ।

नव्यतार्किकमते वाऽभावत्वस्याखण्डोपाधिरूपत्वानभ्युपगमाद् भावभिन्नत्वं तत् । तदपि च समवायसामानाधिकरण्यान्यतरसंबन्धावच्छिन्नप्रतियोगिताकसत्ताभावरूपं, तच्च च भावभिन्नत्वं पूर्वानुपस्थितमपि प्रकारीभूय भासते । एवं च घटाभाव–पटाभावादिप्रतीतीनामभावांशेऽनुगतत्वमपि निर्वहति । न चैवं विषयताऽनवस्था अभावपदार्थतावच्छेदककुक्षिनिक्षिप्तायाः सत्ताऽभावव्यक्तेरप्यभावत्वघटितत्वादिति वाच्यम् । अभावपदार्थतावच्छेदककुक्षिनिक्षिप्तायाः सत्ताभावव्यक्तेः फलबलात् स्वरूपत एव प्रकारत्वोपगमात् । अत एव तु सत्ताज्ञानविरहेऽपि घटो नास्तीति धीर्भवत्यन्यथा तु प्रतियो-

गिज्ज्ञानमुद्रया सत्ताज्ञानस्य तत्र हेतुत्वे तद्विना घटो नास्तीति धियोऽनुत्पाद एव स्यात् । एवं च यथाऽभावबुद्धौ स्वरूपत एव सत्ताभावभानं तथा ज्ञानबाध्यत्वाभावरूपस्यापि सत्त्वस्य बुद्धौ ज्ञानबाध्यत्वग्रहो नापेक्षितः फलबलात् ।

त्वन्मते वा परप्रकाश्यत्वाभावरूपस्यापि स्वप्रकाशत्वस्य ग्रहे परप्रकाश्यग्रहानपेक्षावच्च । बाध्यत्वा*भावरूपस्यापि सत्त्वस्य ग्रहे बाध्यत्वग्रहानपेक्षावच्च । जडेतरत्वरूपस्यापि चित्त्वस्य ग्रहे जडेतरत्वग्रहानपेक्षावच्च दुःखवदितरत्वरूपस्याप्यानन्दपदार्थस्य ग्रहे दुःखवत्त्वग्रहानपेक्षावच्च । ब्रह्मप्रपञ्चोभयसाधारणस्य ज्ञानबाध्यत्वाभावरूपस्यापि सत्त्वस्य ग्रहे ज्ञानज्ञानाद्यनपेक्षत्वस्यापि सूपपादत्वाच्च । व्यावहारिको घटादिः सत्त्वेन ब्रह्मणो न भिद्यते । अबाध्यत्वाद् व्यवहारविषयत्वाद्वा ब्रह्मवदित्यादिनाऽनुमानव्रातेन सत्प्रतिपक्षितत्वाच्चेति तु पुनरसकृदेवाभिहितम् ।

यदपि एतत्पटात्यन्ताभावः । एतत्तन्तुनिष्ठः । एतत्पटानाद्यभावत्वात् । एतत्पटान्योन्याभाववत् । तन्तुनाशजन्यपटनाशस्य कदाऽपि तन्तुवृत्तिता नास्तीति तत्र व्यभिचारवारणायानादिपदम् । यस्य पटस्याश्रयविभागेन नाशस्तदत्यन्ताभावस्य पक्षत्वेऽनादिपदमनादेयमेव । अत्र चैतत्पटप्रतियोगिकात्यन्ताभावत्वावच्छिन्नस्य पक्षीकरणान्न संबन्धान्तरेणात्यन्ताभावमादायांशतः सिद्धसाधनम् । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात्समवायसंबन्धावच्छिन्नो व्यधिकरणधर्मानवच्छिन्नश्च य एतत्पटात्यन्ताभावः स एव वा पक्षः । तन्तुशब्देन च पटोपादानकारणमुक्तं तत्र च प्रागभावस्य सत्त्वान्न तेन व्यभिचारः । कार्यकारणयोरभेदेन सिद्धसाधनादिदूषणानि प्रागेव तत्त्वप्रदीपिकानुमानोपन्यासे निराकृतानि ।

* मिथ्यात्वाभावरूपस्यापीत्यर्थः ।

यद्वा समवायसंबन्धावच्छिन्नोऽयमेतत्पटात्यन्ताभावः । एततन्तुनिष्ठः । एतत्पटप्रतियोगिकात्यन्ताभावत्वात्संबन्धान्तरावच्छिन्नैतत्पटात्यन्ताभाववदिति विशिष्यानुमानम् । इत्यद्वैतसिद्धिकृतः साटोपमभिदधिरे ।

तदिदं तेषामभिधानं कीदृशमित्यालोचयामः । तथा हि एतत्पटात्यन्ताभावः एततन्तुनिष्ठः एतत्पटानाद्यभावत्वादिति हेतुर्जातिरूपत्वादसाधको व्याप्तिनैरपेक्ष्येण एतत्पटानाद्यभावत्वरूपसाधर्म्यमात्रेणैव प्रवृत्तत्वादन्यथा तु सद्भेदः सन्निष्ठः सत्प्रतियोगिकाभावत्वात् । संयोगसंबन्धावच्छिन्नप्रतियोगिताकसदत्यन्ताभाववत् । समवायसंब*न्धावच्छिन्नप्रतियोगिताकसदत्यन्ताभाववद्वा । संयोगसमवायोभयसंबन्धावच्छिन्नप्रतियोगिताकसदत्यन्ताभाववद्वेत्यनुमानेन सति ब्रह्मणि सद्भेदोऽपि तवापद्येत । न ह्येतत्पटात्यन्ताभावे एततन्तुनिष्ठत्वसाध्यकानुमानापेक्षया सति सद्भेदानुमाने कश्चिद्विशेषोऽस्ति ।

यदि तु सति सद्भेदानुमाने बाध इति नानुमानप्रवृत्तिस्तर्हि एतत्पटात्यन्ताभावे एततन्तुनिष्ठत्वसाधने किं बाधो नावतरति ? अवतीर्णोऽपि बाधो व्यावहारिक इत्येततन्तुनिष्ठत्वं व्यावहारिकमेतत्पटात्यन्ताभावे बाधमानोऽपि यावद्व्यवहारकालं बाधानवताराद् व्यवहारप्रतिबन्धाक्षम इति व्यवहारः सूपपन्नः । एवं स्थिते यत्र यद्वस्तु व्यावहारिकं तत्र तद्वस्त्वभावो न व्यावहारिक इति नियमानुपालनमपि सर्वजनानुभवसिद्धं सुकरम् ।

अथवा तन्तुषु पटो व्यावहारिकः एतत्पटात्यन्ताभावे एततन्तुनिष्ठत्वं तु पारमार्थिकं विरोधित्वं च समानसत्ताकत्वेन ।

* दृष्टान्तत्रयानुसरणे बीजं विज्ञैः स्वयमूहनीयम् ।

एवं च तन्तुषु पट–तदभावयोर्विषमसत्ताकतया विद्यमानोऽपि पारमार्थिकोऽभावो व्यावहारिकं तन्तुषु पटं न बाधते इति न कश्चिदपि व्यवहारविप्लवः। इत्यभिमानो वादिनां तर्हि प्रतियोगि–तदभावयोरुभयोर्व्यावहारिकत्वपक्षे यत्र यः पदार्थो व्यावहारिकस्तत्र तदभावो न व्यावहारिक इति नियमानुपालनं दुर्घटं तन्तुषु पटाभावस्य पटस्येव व्यावहारिकतया पटव्यवहारकाले पटाभावस्य विद्यमानत्वेन उभयोरविशेषेण सकृदेव व्यवहारप्रसङ्गस्यावर्जनीयत्वात्। पट–तदभावयोरुभयोरपि समानसत्ताकतया बाधनिश्चयात्पूर्वं तौल्येन विद्यमानतया उभयव्यवहारस्यैव प्रामाण्यापाताच्च। व्यावहारिकबाधनिश्चयात्पूर्वं पटव्यवहारस्तदनन्तरं तु न तथेति व्यवस्थेत्यभिधानमपि कोविदकदम्बे हासायैव पट–तदभावविषयकज्ञानसामग्र्योः सर्वदैव समवहितत्वेनोभयोरपि ज्ञानस्यैकशेषस्य कर्तुमशक्यतया सर्वदा प्रसङ्गात्।

वस्तुतस्तु पटविषयकज्ञानसामग्र्याः प्रतियोगिज्ञानसामग्रीमुद्रया पटाभावविषयकज्ञाने एवोपक्षीणतया पटाभावज्ञानमेवोदयमासादयेन्न तु कदाऽपि पटज्ञानमिति सामग्रीप्रतिबध्यप्रतिबन्धकभावाभिज्ञानां कृतधियामपरोक्षम्। किंच प्रतियोगि–तदभावयोरुभयोरपि व्यावहारिकत्वेनोभयोर्ब्रह्मज्ञानबाध्यत्वस्याभ्युपेयतया पटाभावस्य व्यावहारिकत्वाभ्युपगमेऽपि किं तेन ते साधितं स्यादृते पटव्यवहारोपप्लववृथाचेष्टनात्।

प्रतियोगिनः पटादेर्व्यावहारिकत्वं तदभावस्य तु पारमार्थिकत्वमिति पक्षेऽपि पुनरिदमनुसंधेयम्। व्यावहारिकस्य पटादेर्बाधकता हि पारमार्थिकाभावपक्षे अन्यूनसत्ताकत्वेन वक्तव्या। तद्घटकन्यूनसत्ताकत्वं च तत्सत्ताप्रयुक्तसत्ताकत्वं यथा शुक्तिसत्ता-

प्रयुक्तसत्ताकत्वं शुक्तिरूप्ये । यथा वा परमते ब्रह्मसत्ताप्रयुक्तसत्ताकत्वं तदध्यस्तजगन्मात्रे । एवं च ब्रह्मसत्ताप्रयुक्तसत्ताकत्वाभ्युपगमनिबन्धनमेव बाधकत्वमास्थितं भवता । तच्च पटादीनां मिथ्यात्वसिद्धिनान्तरीयकमिति मिथ्यात्वसिद्ध्या ब्रह्मसत्ताप्रयुक्तसत्ताकत्वं जगज्जाते तत्सिद्ध्या च मिथ्यात्वसिद्धिरिति तु स्फुटोऽन्योन्याश्रयः ।

तमेव भान्तमनुभाति सर्वमिति श्रुतिर्जगतो ब्रह्मसत्ताप्रयुक्तसत्ताकत्वे प्रमाणमिति तु ते मतिकर्दमानुष्ठानप्रय*त्नमात्रं प्रमाणान्तरविचारावसरे प्रमाणान्तरोपन्यासकथाया अयुक्तत्वादितरथा वर्षशतेनापि कथाकोलाहलस्यावयोरनुपशम्यत्वेन विचारफलापर्यवसानप्रसङ्गात् । यथा च सा श्रुतिर्जगन्मिथ्यात्वं न बोधयति किन्तु तद्विरुद्धमस्मदभिमतमेवार्थं तथा वयमिहाग्रे साधु निरूपयितास्महे ।

यदि तु सद्भेदः सन्निष्ठः । सत्प्रतियोगिकाभावत्वात् । संयोगादिसंबन्धावच्छिन्नप्रतियोगिताकसदभाववदित्यनुमाने हेत्वसिद्धिः । परमते प्रमेयत्वाभिधेयत्वादेरिव सतः केवला†न्वयित्वेन तदभावाप्रसिद्धेरित्युच्यते । तदाऽस्तु स्वरूपसंबन्धेन वा स्वरूपत एव वा सतः केवलान्वयित्वं तथाऽपि संयोग—समवायादिसंबन्धेन सत्त्वेन न त‡स्य तथा§त्वमिति सत्प्रतियोगिकाभावोनाप्रसिद्धः ।

एतेन सत्प्रतियोगिकस्य तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य विवक्षणे तस्य दृष्टान्तेऽसत्त्वेन साधनवैकल्यम् । संयोगा-

* यथा कर्दमे सारस्वरूपं जलं दुर्लभं तथाऽत्र विचार्यमाणोऽर्थो दुर्गमो भवति कुयकाग्रमवलम्बमानस्य ते इति तत्त्वम् ।

† सतः केवलान्वयित्वं निर्विशेषब्रह्मवादे ।

‡ सतः ।

§ केवलान्वयित्वम् ।

दिसंबन्धावच्छिन्नप्रतियोगिताकस्य तस्य तु विवक्षणे स्वरूपासिद्धिः । हेतोः सद्भेदेऽसत्त्वादित्यपि परास्तम् । भेदात्यन्ताभावोभयसाधारण्येन सत्प्रतियोगिकाभावत्वेनोभयोपसंग्रहात् ।

भेदात्यन्ताभावोभयसाधारणं सत्प्रतियोगिकाभावत्वं न किंचित्प्रमाणसिद्धं सन्निष्ठप्रतियोगितानिरूपकतायाः स्वरूपविश्रान्तायाः प्रत्यभावं भिन्नत्वादिति तु नाद्वैतसिद्धिकृता सुवचं स्वयमपि तेन संयोगसमवायोभयसाधारण्येनैतत्पटप्रतियोगिकात्यन्ताभावत्वावच्छिन्नस्य पक्षत्वेनावलम्बनात् । इतरथा तु संयोगावच्छिन्नप्रतियोगितानिरूपकतायाः समवायावच्छिन्नप्रतियोगितानिरूपकतातोऽभिन्नत्वेन संयोगसमवायोभयसाधारणैतत्पटप्रतियोगिकात्यन्ताभावत्वावच्छिन्नस्य पक्षीकर्तुमशक्यतया तथोक्तेरनौचिती स्यादिति प्रव्यक्तमेवेति विस्तरभियोपरमामः ।

यदि पुनः पक्षकुक्षिनिक्षिप्तो यः सद्भेदः स किं सन्निष्ठप्रतियोगिताको भेदः । अथवा सत्त्वावच्छिन्नप्रतियोगिताको भेदः । तत्र प्रथमे सद्घटोभयभेदस्य सत्त्व परेणाप्यङ्गीकरणीयतया सिद्धसाधनमिष्टापत्तिश्चेति किं वतं वादिनः । द्वितीये तु सत्त्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्या पक्षाप्रसिद्धिः । सत्त्वे पदार्थत्वादिना भेदप्रतियोगितावच्छेदकत्वानुमाने तु प्रमेयत्वे व्यभिचार इति प्रविश्याभिधत्से तदा वदावधाय व्यावहारिकस्य पटादेरसतो नरशृङ्गादेश्च ब्रह्मतादात्म्यमभ्युपगच्छसि न वा । तत्र प्रथमे ब्रह्मणः सर्वथा स्वरूपच्युतिः । द्वितीये तु सन्मात्रस्वरूपस्य ब्रह्मणो भेदोऽभ्युपगतो भवतेव तदतिरिक्ते इति न सद्भेदाप्रसिद्धिनिबन्धनपक्षाप्रसिद्धिः । पटादौ विद्यमानोऽपि ब्रह्मभेदः काल्पनिक इति न प्रतियोगिसमानसत्ताक इति तु पुनरत्यन्तानभिज्ञमात्रचोद्यं सद्भे-

द्माचस्यापेक्षणीयत्वेन तत्प्रसिद्धिमात्रेण चारितार्थ्येऽधिकचोद्यानव-तारात् । किञ्च मिथ्यात्वानुमितेः पूर्वं ब्रह्मणोऽधिकसत्ताकत्वं तद-तिरिक्तस्य घटादेश्चाल्पसत्ताकत्वमिति स्वरहस्यावेदनं शुद्धश्रद्धेषु शिष्येष्वेवोचितं भवति न तु प्रदीप्तधिषणेषु वादिषु न्यूनाधिकस-त्ताकत्वादिकथाया जगन्मिथ्यात्वसिद्धिमूलकतया मिथ्यात्वानुमिते-रर्वाग्वादिषु तादृशस्य स्वगोष्ठीमात्रनिष्ठसंकेताभिधानस्य सर्वथा स्व-निग्रहनिदानत्वात् ।

सद्भेदस्य सत्प्रतियोगिकाभावस्य च प्रसिद्धावपि सन्निष्ठप्रति-योगितायाः सामान्यधर्मावच्छिन्नत्वे प्रमाणविरहेण न सत्त्वावच्छि-न्नप्रतियोगिताकभेदप्रसिद्धिः । नापि सत्त्वावच्छिन्नप्रतियोगिताकाभा-वप्रसिद्धिर्नापि सदभावीयप्रतियोगितावच्छेदकः संबन्धः संयोग-समवायादिरिति चेत्का क्षतिर्नः ।

सद्भेदप्रसिद्धयैव पक्षप्रसिद्धिसम्भवात् । सत्प्रतियोगिका-भावरूपे हेतौ यद्यपि प्रतियोगिता न किञ्चित्संबन्धावच्छिन्ना प्रविष्टा तथाऽपि संयोगसंबन्धावच्छिन्नप्रतियोगिताकसदभावादेर्दृष्टा-न्ततयोपन्यासेन अभावीयप्रतियोगितावच्छेदकः संबन्धोऽपेक्षणीयः । स च संयोगसमवायादिः सम्बन्धोऽभावीयप्रतियोगितावच्छेद-कत्वेन भवतोऽप्यभिमत इति किं तत्साधनप्रयासेन नः । अत एव तु समवायसंबन्धावच्छिन्नोऽयमेतत्पटात्यन्ताभाव इत्यादिकं विशिष्य पक्षत्वेनानुससाराद्वैतसिद्धिकारः स्वयमिति न शास्त्रम-ञ्जुषां विदुषां परोक्षम् ।

सन्निष्ठप्रतियोगितायाः परमते संयोगादिर्व्यधिकरणसंबन्ध इति व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाव इव सोऽप्यनभ्युपग-मपराहत इति दृष्टान्तासिद्ध्याम्नानाभिमानस्तु पुनः स्वसिद्धान्तवि-

स्मरणनिबन्धनस्तत्तच्च त्वदीयग्रन्थेष्वेव व्यधि*करणधर्मावच्छिन्नप्रतियोगिकाभावव्यवस्थापनात् ।

यदपि सत्प्रतियोगिको भेदः सन्निष्ठ इति प्रयोगे सत्प्रतियोगिकभेदे सन्निष्ठत्वसाधने सिद्धसाधनं व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताके सत्प्रतियोगिकभेदे तादृशधर्मावच्छिन्नप्रतियोगिताके च भेदे वादिनोऽपि सम्प्रतिपत्तेः । सत्त्वावच्छिन्नप्रतियोगिताके तु भेदे सन्निष्ठत्वसाधने बाधः । सिषाधयिषितं सन्निष्ठत्वमपि च यदि प्रातिभासिकं तर्हि ओमिति ब्रूमः । सत्प्रतियोगिकभेदे प्रातिभासिकसन्निष्ठत्वे क्षतिविरहात् । व्यावहारिकसन्निष्ठत्वसाधनेऽपि न दोषस्तस्य पारमार्थिकसत्त्वभङ्गप्रयोजकत्वविरहात् । पारमार्थिकसन्निष्ठत्वसाधने तु शून्यवादप्रसङ्गः । सति पारमार्थिकसद्भेदे सर्वस्य जगतः शून्यैकतत्त्वताया आवश्यकत्वादिति । तस्मादेतत्पटात्यन्ताभावः । एततन्तुनिष्ठः । इत्यादिप्रयोगेणाशङ्कितं सत्प्रतियोगिकोभेदः सन्निष्ठ इत्यादिप्रयोगस्य साम्यमसाधु इति कैश्चिदभिधीयते ।

तदेतदपि बालव्यामोहनमन्त्रमात्रम् । यतः सत्त्वावच्छिन्नप्रतियोगिताकभेदे यथा सन्निष्ठत्वसाधने बाधस्तथा एतत्पटात्यन्ताभावस्यैतत्तन्तुनिष्ठत्वसाधनेऽपि बाधः समानः । एतन्तुषु एतत्पटस्य व्यावहारिकतया एतत्पटाभावस्य च पारमार्थिकतया विषयभेदेन न कश्चिद्दोष इति चेत् । तर्हि ब्रह्मण्यपि सत्त्वं सांवृत्तिकं सत्त्वाभावस्तु पारमार्थिक इत्यपि तुल्यम् । पारमार्थिकता सत्त्वनियतेति तु दुर्भणं पारमार्थिकताया वस्तुस्वरूपविश्रान्तायाः सति सदात्मकत्वादसति चासदात्मकत्वात् ।

---

* व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगन्तृश्रीन्द्रलमतानुयायिभट्टमतानुवर्त्तिनां भवतां प्रायो व्यवहारे तदभ्युपगतपदार्थेषु नाननुमतिरिति तु सुप्रसिद्धमेवेति भावः ।

सति पारमार्थिकसद्भेदाभ्युपगमे शून्यवादप्रसङ्गबिभीषिका तु तन्तुषु पारमार्थिकपटात्यन्ताभावाभ्युपगमे जगतोऽपटत्वप्रसङ्गापत्तिशङ्कया समैव । पटस्तु व्यावहारिक एव व्यवहाराय पर्याप्त इत्यतिरिक्ता तदीयसत्ता नाभ्युपेया ब्रह्मणि तु पारमार्थिकमेव सत्त्वमभ्युपेयमिति वैषम्यमिति चेत् । यद्धि निर्विशेषसत्स्वरूपं ब्रह्म व्यवहारायापि न पर्याप्नोति कृतं तदङ्गीकारदुर्व्यसनेनेति सुदूरपराकृता तच पारमार्थिकसत्त्वव्यवधारणप्रत्याशा ऽपि ।

किंच प्रमाणानवतारेऽपि निर्विशेषसत्स्वरूपं ब्रह्म स्वतःसिद्धमिति वानरमुष्टयवष्टम्भे शून्यमपि स्वतःसिद्धमित्येवोत्तरं प्रमाणानवतारस्योभयत्रापि समानत्वात् । यद्यसद्भिन्नत्वं सत्त्वं न च तदस्त्यत्यन्तासति शून्ये तर्हि सत्त्वमसद्भिन्नत्वमसत्त्वं च सद्भिन्नत्वमिति दृढोऽन्योन्याश्रय इति न ते सत्त्वासत्त्वे तथा निर्वक्तुं शक्येते इति किं वहुना निरूपकेषु ।

अस्तीति प्रतीतिविषयत्वं सत्त्वं कालसंबन्धित्वं वा सत्ताजातिमत्त्वं वा भावरूपत्वं वा अभावभिन्नत्वं वा सत्त्वं तदेव च ब्रह्मणि । एते तु पक्षाः सर्वथोपेक्षामर्हन्ति । वादिभिरनुक्तत्वादपलापप्रायत्वात् । निर्विशेषब्रह्मवाद—शून्यवादोभयसाधारण्येन चोद्यपरिहारयोः साम्येनैव संभवाच्च । निर्विशेषब्रह्मवादे हि सच्चिदानन्दादिपदान्यपि न कञ्चनभावभूतमर्थमभिधातुमीशते यश्च विधित्सितोऽथवा बुबोधयिषितोऽभावरूपोऽर्थः स तु शून्यसाधारण इतीहै*व पराक्रम्योपपादयितास्महे ।

पारमार्थिकं सत्त्वं निषिषेधयिषुर्निषेद्धा चेल्लब्धात्मा तर्हि सत्त्वसिद्धिरवर्जनीया । यदि तु निषेद्धा न लब्धस्वरूपस्तदा निषे-

* निर्विशेषनिराकरणावसरे ।

थासिद्ध्या सत्त्वसिद्धिरुचितैवेत्युभयतःपाशारज्जुरिति तु वादिनां व्यामोहमात्रं निर्विशेषसदभ्युपगमस्य शून्यातिरेके प्रमाणविरहात्। निर्विशेषसतः शून्यातिरेकस्यापि विशेषरूपतया निर्विशेषत्वहानिहेतुताया अवर्जनीयत्वात्। शून्यातिरेकोऽपि निर्विशेषस्वरूपताप्रयुक्तो नातिरिक्तधर्मप्रयुक्त इति न तस्य निर्विशेषस्वरूपताहानहेतुत्वमिति चेत्। शून्यस्यापि स्वभावतः सर्वविशेषप्रत्यनीकरूपतया सर्वविशेषप्रत्यनीकयोस्तयोः किं वा विशेषकमिति कृतावधानो वद स्वरूपमेवेति चेत्। न तदपि। उभयोरपि स्वरूपस्य स्वरूपत्वान्निर्विशेषस्वरूपत्वाच्च।

यद्यनयोरेकः सदात्मा निर्विशेषोऽपरस्तु असदात्मेति सदसतोर्निर्विशेषस्वरूपत्वेऽपि सदात्मकत्वासदात्मकत्वाभ्यां विशेष इत्यातिष्ठसे तर्हि सा सदात्मकता स्वरूपतोभिन्ना। अथवा केनचिद्विशेषेणेति वद। स्वरूपतश्चेत्। तर्हि शून्यात्मताऽपि तथेति न कोऽपि विशेषको धर्मो भवत्युदीरितः। केनचिद्विशेषेण भिन्नेति पक्षे निर्विशेषत्वच्युतिर्विशेषकधर्मान्तराभ्युपगमादित्युक्तप्रायमेव।

किंच सदात्मकतायाः केनचिद्विशेषेण भिन्नत्वाङ्गीकारे विशेषेणापि विशेषवतैव भवितव्यमितरथा विशेषाङ्गीकारेऽपि शून्यसांकर्यशङ्कायास्तादवस्थ्यात्। एवं च तेनतेन विशेषेण विशेषवतैव भाव्यमित्यनवस्था। विश्रामाङ्गीकारे तु विशेषका*निरूपणाच्छून्यात्म–सदात्मनोरैक्यमाशङ्कितं तदवस्थमेव।

यदि सदात्मनस्त्रिकालाबाध्यत्वं विशेषस्तर्हि किं शून्यमपि कदाचिद्बा†ध्यते। शून्यस्यापि बाधाङ्गीकारे तु शून्यबाधधाराऽन-

* विशेषप्रयोजकीभूतधर्मानिरूपणादित्यर्थः

† न कदाऽपि बाध्यत इत्यर्थः।

वस्था दुरुद्दूरैव ते स्यादिति जानाति भवानपि । तस्माच्छून्यस्यापि त्रिकालाबाध्यत्वान्न कश्चिदपि विशेषोऽभिहितो भवति । यदि तु निर्विशेषाद्वयचैतन्यरूपत्वं सति सत्त्वं न च तत्संभाव्यतेऽपि शून्ये । तत्र यथा सच्चिदानन्दपदत्रयेण असद्भिन्नत्व–जड़भिन्नत्व–दुःखवदितरत्वरूपैरैकस्यैवार्थस्य सर्वविशेषप्रत्यनीकस्याखण्डस्य बोधनेऽपि पदानां न पर्यायत्वमानर्थक्यं वा बुबोधयिषितार्थस्य सविशेषत्वं वा प्रसज्यते । कल्पिततत्तद्विशेषावधूननद्वारा निर्विशेषसन्मात्रस्यैव प्रत्याय्यत्वादेवमिह निर्विशेषपदेन सर्वविशेषप्रत्यनीकरूपतायाः । अद्वयपदेन सजातीयविजातीयस्वगतभेदशून्यतायाः । चैतन्यपदेन चाजड़स्वरूपताया निर्दिदिक्षितत्वान्नावद्यसंबन्धगन्धोऽपीति वदसि तर्हि कृतावधानो निशा*मय । शून्ये निर्विशेषपदविवक्षिताऽस्ति सर्वविशेषप्रत्यनीकरूपता । शून्ये विशेषाणामसम्भाव्यत्वात् । अस्ति चाद्वयपदविवक्षिता सजातीय–विजातीय–स्वगतभेदशून्यताऽपि भेदस्य विना विशेषैर्दुर्निरूपत्वात् । शून्ये च विशेषाणां सुदूरपराहतत्वात् । चैतन्यपदेन विवक्षिता जड़ेतरता तु शून्ये सर्वथैवावश्यकी न हि शून्यं जड़मित्याहुः प्राज्ञाः ।

न हि शून्यवादिनो माध्यमिका अपि शून्यं जड़ं जड़ं वा घटादिकं शून्यमाहुः । किन्तु सर्वस्यापि पदार्थस्य सांवृत्तिकत्वात्कार्यकारणभावादेश्च दुर्निरूपत्वात् शून्यं तत्त्वमाहुः ।

अथ सत्त्वं स्वप्रकाशत्वं न च तच्छून्ये । तर्हि स्वप्रकाशे ऽत्मनि आनन्दाद्यङ्गीकारे सविशेषताप्रसङ्गस्तद्वारणाय स्वप्रकाशत्वं

* निशामयेत्यस्य साधुत्वं तु परैरेवाग्रहङ्क समाहितमिति तद्विदः ।

यदि परप्रकाश्यत्वाभावस्तदा तदस्ति शून्येऽपि सुगतो हि शून्यं तत्त्वं ब्रुवाणस्तस्य केनापि प्रकाश्यतां नानुमेने । प्रकाश्यत्वाभावे त*त्सिद्धिः कथमिति तु निर्विशेषात्मवादिनस्तवापि तुल्यं न ह्यात्माऽऽत्मना प्रकाश्यस्तवापि । प्रकाश्यत्वे तु निर्विशेषस्वरूपता-ऽपे†यादेवात्मनः । प्रकाश्यतायास्त्वन्मतेऽनात्मव्याप्यतया आत्म-नोऽनात्मस्वरूपताप्रसङ्गश्च ।

भगवत्याः संविदः सर्ववस्तुव्यवस्थापकतया न तदपलापः शक्यः कर्तुं गीर्वाणगुरुणाऽपीति शून्यव्यवस्थितिरपि संविन्मुखनिरीक्ष-णलब्धस्वात्मसत्त्वप्रसादेति कथमिव सोप‡जीव्या सती साध्वी उपजी-वकैः शून्यादिवादैरपहस्तिता स्यात्संनिपातविरोधादिति ब्रूषे चेच्चिरं जीव आयातोऽसि वैदिके युक्तिमार्गे वस्तुमात्रं व्यवस्थापयन्ती संवि-त्स्वात्मनोऽपि चेद् व्यवस्थापिका तर्हि सविशेषस्वरूपतैव तस्याः प्रकारान्तरेण भवत्यभ्युपेता । न हि स्वात्मानमनवगाहमाना संवित् स्वात्मनि प्रमाणीभवितुमर्हति । न चावगाहनं सविशेषत्वाभ्युपगमादृते इत्यवोचाम ।

किंच संविदोभवन्मतेऽवगाह्य§त्वेऽननुभूतित्वमनित्यत्वम-नात्मत्वं च प्रसज्येतेत्यपि समगरिष्महीहैव ।

एतेन स्वानुभवसाक्षिका यथा संविन्नैवं शून्यमित्यतिरेकः शून्यवाद–निर्विशेषवादयोरित्यकोविदकल्पना ऽपि कदर्थिता भवति पूर्वोक्तदोषैरेव तत्पक्षक्षपणात् । अनुभवस्य सर्वस्य सविशेष एव प्रमाणभावाच्च । निस्साक्षिकतायाः शून्य–निर्विशेषात्मोभयसाधार-

* शून्यसिद्धिः ।

† प्रकाश्यतायाः सविशेषत्वव्याप्यत्वादिति भावः । ‡ संवित् ।

§ अवगाहने सविशेषत्वमनवगाहने च निर्विशेषपदार्थस्य शून्यातिरेको दुर्निरूप इति भावः ।

ण्याच्च । बाधानवतारस्यापि शून्यवादनिर्विशेषपक्षोभयसा*धारण्येन बाधावतारानवतारप्रयुक्तविशेषस्यापि वक्तुमशक्यत्वाच्च ।

एवं च निर्विशेषसदभ्युपगन्तृमते सति पारमार्थिकसद्भेदस्वीकारे शून्यवादप्रसङ्गविभीषिकाया दुर्दर्शतया सत्प्रतियोगिको भेदः सन्निष्ठ इत्यनुमानस्य वाद्युदीरितानुमानतुल्यत्वमिति सुपुष्कलम् ।

तस्मात्साधु समर्थितमिदं यदेतत्पक्षानाद्यभावत्वरूपहेतोर्नीतिरूपत्वमिति । मादृशामिदमनपरपरिशीलितमनपरपरिलङ्घनीयं च वादिनिग्रहणराजवर्त्मेति सन्तोऽवधारयन्तु ।

समवायसंबन्धावच्छिन्नोऽयमेतत्पटात्यन्ताभावः । एतत्तन्तुनिष्ठः । एतत्पटप्रतियोगिकात्यन्ताभावत्वादिति तु प्रयोगं पूर्वमेव प्रसङ्गतो निराकार्ष्मेति† नेह पृथक् तन्निराकरणप्रयत्नः ।

यदपि अव्याप्यवृत्तित्वानधिकरणत्वे सत्युक्तप‡क्षतावच्छेदकवत् । समानाधिकरणात्यन्ताभावप्रतियोगि । अनात्मत्वात् । संयोगवत् । न च विश्वात्यन्ताभावे व्यभिचारः । तस्याधिकरणस्वरूपत्वे अनात्मत्वहेतोरेवाभावात् । अतिरिक्तत्वे तस्य मिथ्यात्वेनात्यन्ताभावप्रतियोगितया साध्यस्यैव सत्त्वात् । न चात्यन्ताभावस्यात्यन्ताभावे तत्प्रतियोगित्वलक्षणमिथ्यात्वासिद्धिरिति वाच्यम् । अभावेऽभावप्रतियोगित्वस्य भावगताभावप्रतियोगित्वाविरोधित्वात् । प्रागभावस्यात्यन्ताभावप्रतियोगित्वेऽपि तत्प्रतियोगित्वस्य घटादौ सर्वसिद्धत्वात् । उपपादितं चैतन्मिथ्यात्वमिथ्यात्वे । यच्च

---

* शून्यं यथा निस्स्वाभिकमेवं निर्विशेषसद्वादोऽपि । निर्विशेषसति साक्षितायाः कल्पयितुमशक्यत्वादिति ग्रन्थग्रन्थिः ।

† अव्याप्यवृत्तिसंयोगादिस्थले स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्य परेणाप्यङ्गीकृतत्वादव्याप्यवृत्तित्वानधिकरणत्वे सतीति पक्षताऽवच्छेदककुक्षौ सत्यन्तम् ।

‡ ब्रह्मज्ञानेतराबाध्यब्रह्मान्यासत्त्वानधिकरणत्ववदित्यर्थः ।

चाव्याप्यवृत्तित्वानधिकरणशब्देनैकदेशावच्छेदेन विद्यमानत्वं पक्ष-विशेषणं विवक्षितं तेन स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वोक्तौ बाधः । अवयववृत्तित्वानधिकरणत्वोक्तौ घटादीनामपक्षत्वापत्ति-रिति दूषणद्वयमपास्तम् । अनात्मत्वहेतुस्तु जड़त्वहेतुव्याख्याने-नैव व्याख्यातः । अत एव नित्यद्रव्यान्यदव्याप्यवृत्तित्वानधिकरणम् । उक्तपक्षतावच्छेदकवत् । केवलान्वय्यन्त्यन्ताभावप्रतियोगि । पदा-र्थत्वान्नित्यद्रव्यवदित्यपि साधु । दृष्टान्तश्चायं पररीत्या स्वमते तु शुक्तिरूप्यवदित्येव । न च स्वरूपेणात्यन्ताभावप्रतियोगित्वे-ऽत्यन्तासत्त्वापातः । तद्वैलक्षण्यप्रयोजकाभावादिति वाच्यम् । उत्पत्तिनिवृत्त्योरन्यतरप्रतियोगित्वेन परिहारादित्यद्वैतसिद्धिकृतस्त-देतदपि शिष्यधीव्यामिश्रणप्रायमिति न तर्ककर्कशशाणसहं तथा हि यत्रयत्र स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं संयोगविभागादौ तत्रतत्रास्त्यव्याप्यवृत्तित्वमिति साध्यव्यापकत्वं, जड़त्वरूपमना-त्मत्वं तु रूपे जलपरमाणु*वृत्तिस्नेहेऽपि च तत्राव्याप्यवृत्तित्वं नास्तीति साधनाव्यापकत्वेन अव्याप्यवृत्तित्वं भवत्युपाधिः ।

न च रूपस्नेहादेरपि जड़त्वेन तत्र तत एव हेतोः स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं तत्र स्वनुमानमिति न साधनाव्यापकत्वमिति वाच्यम् ।

जड़त्वेन स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमिच्छ-तो भवतो हेतोरपि जड़त्वेनात्यन्ताभावप्रतियोगितया पक्षावृत्तित्वेन स्वरूपासिद्धतया साध्यसाधकत्वासंभवात् ।

न हि हेतुः स्वसमानाधिकरणात्यन्ताभावप्रतियोगी भव-न्नपि स्वाधिकरणवृत्तिर्विरोधात् । यदि तु तस्य पक्षधर्मत्वं व्याव-

* रूपमपहाय जलपरमाणुस्नेहानुसरणप्रयोजनं स्वयमूहन्तां सुधियः ।

हारिकं स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं तु ब्रह्मस्वरूपविश्रान्तमिति हेतोर्नापक्षधर्मत्वमित्यसकृन्निराकृतं प्रलपितमेव पुनः प्रलपसि तर्हि पूर्वोक्तदिशैव तत्तिरस्करणीयमिति किं भूयोवाग्व्यामिश्रणेन । किंच तथा सति साध्यताऽवच्छेदककुक्षौ स्वसमानाधिकरणेत्यपि व्यर्थं स्वानधिकरणे सिद्धस्य स्वप्रतियोगिकाभावस्य व्यावहारिकतया पारमार्थिकाभावस्यैव च सिषाधयिषितत्वेन तस्य चासिद्धत्वेन सिद्धसाधनशङ्कायाः सुदूरपराहतत्वात् ।

किंच प्रतियोग्यविरोध्यभावस्यानुमित्सितत्वे तत्तत्र मिथ्यात्वनिरुक्तिषु संयोगादेरव्याप्यवृत्तितया गगनादेश्चावृत्तितयाऽभावप्रतियोगित्वसिद्धा सिद्धसाधनवारणाय तत्तत्र तत्तद्विशेषणोपादानमपि व्यर्थं स्यादिति प्रतियोगिविरोध्यभावस्यैवानुमेयत्वेन स्वसमानाधिकरणात्यन्ताभावप्रतियोगिनस्तस्यापक्षधर्मत्वेनाहेतुताया आवश्यकत्वम् ।

न्यायप्रयोगस्य वादिप्रतिपत्त्यर्थतया वादिनश्च हेतोः पक्षधर्मत्वस्यानुमततया साध्यसिद्ध्युत्तरं परामर्शैकविरोधिनोऽपक्षधर्मत्वज्ञानस्य चाकिंचित्करत्वेनानुमितेरप्रतिबन्ध इति त्वज्जनजृम्भणीयम् । साध्यसिद्ध्युत्तरमपक्षधर्मत्वज्ञानेऽपि पूर्वोत्पन्नानुमितिधर्मिकाप्रामाण्यग्रहस्यावश्यकत्वात् । इदं ज्ञानमप्रमा अपक्षधर्महेतुविषयकज्ञानजन्यत्वादित्येवमप्रामाण्यस्य सुग्रहत्वादिति तत्त्वम् । न च स्वजनकज्ञानाप्रामाण्याप्रामाण्ये न स्वाप्रामाण्याप्रामाण्यग्राहके व्याप्तिपक्षधर्मताविशिष्टेन पृथिवीत्वादिना उत्पत्तिकालावच्छिन्ने घटे गुणसाधने जनकज्ञानप्रमात्वेऽपि स्वजन्यानुमितेरप्रमात्वादिति बाधाबाधयोरेव विषयसदसद्भावनियामकतेति नापक्षधर्महेतुविषयकज्ञानजन्यत्वग्रहोऽप्रामाण्यं ग्राहयितुमीशीतेति वाच्यं जगतो वैश्वरूप्येण यत्र

यस्य पुरुषस्य स्वजनकज्ञानाप्रामाण्यग्रहद्वारैवाप्रामाण्यग्रहः कार्यभूते ज्ञाने तत्र तथा भावस्य दुरपन्हवत्वात् । अन्यथा स्वरूपासिद्धि–व्यभिचारादेः पक्षे साध्यवत्ताग्रहाविरोधित्वेन जातायामनुमितौ वादिनस्तदुद्भावनवैयर्थ्यापत्तिरिति व्यक्तं विवेकिनाम् ।

स्थलविशेषे मुग्धस्यानुत्पन्नं तु तादृशज्ञानं न दोषायेतरथा बाधव्यभिचारादिस्थलेऽपि मुग्धस्य तदनुपस्थितौ सद्धेतुताप्रसङ्गः । अत एव हेत्वाभासकाण्डे असाधारणग्रन्थे (साध्यसमानाधिकरणं तु नासाधारणं दशाविशेषे तद्भ्रमस्तु पुरुषदोषो व्याप्य इव साधारण्यभ्रमः) । इत्युक्तं दीधितिकृता । व्यक्तमिदमेतेन यत् सद्धेतुत्वमसद्धेतुत्वं च वस्तुतत्त्वनिबन्धनं न तु ज्ञानाज्ञाननिबन्धनं सद्धेतावपि भ्रमाद् दुष्टत्वग्रहे हेतोरदुष्टत्वात् । दुष्टेऽपि च दोषानुपस्थितावपि वस्तुतो दुष्टत्वात् । दोषानुपस्थितिस्तु पुरुषापराधो न हेत्वपराध इति न्यायमर्मविद्भिः स्वयमिह बहूहनीयमिति कृतं वाचां विसर्गः ।

केचिदस्मदनुयायिनो निरुक्तानुमानमुपक्रम्यैवं दूषयितुमुद्यच्छन्ते अनात्मत्वहेतुना यः स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमनुमातुं प्रवृत्तस्तस्य मतेऽनात्मत्वरूपो हेतुरप्यनात्मभूतो जडजातान्तर्गतत्वात्स्वस्यापीति तस्यापक्षधर्मत्वेन कथमनुमापकता पक्षधर्मत्वे वा कथं स्वसमानाधिकरणात्यन्ताभावप्रतियोगिता । न चाव्याप्यवृत्तिरभावो येन स्व–स्वाभावयोरुभयोः समावेशसंभवस्तथा सत्यर्थान्तरतापातात् । न ह्यनुमानेन मिथ्यात्वं साधयतस्ते अव्याप्यवृत्त्यभावप्रतियोगित्वं सिषाधयिषितं परेणापि तस्याङ्गीकरणीयत्वात् ।

न च व्यावहारिकी पक्षधर्मता पारमार्थिकी च स्वसमानाधिकरणाभावप्रतियोगितेति न कश्चिच्चोद्यसंभवः । व्यावहारिकैरेव पक्षसाध्य–दृष्टान्तादिभिः पारमार्थिकसाधनसंभवात् । साधकतायां पारमार्थिकताया अनपेक्षणीयत्वात् । मिथ्याभूतेनापि प्रतिविम्बादिना विम्बानुमानदर्शनेन मिथ्याभूतेनापि रेखादिना सतोऽक्षरादेर्यथार्थप्रतिपत्तिदर्शनेन च साधकतायाः पारमार्थिकत्वव्यभिचारित्वादिति वाच्यं व्यावहारिक–पारमार्थिकपरिभाषाया जगन्मिथ्यात्वसिद्ध्यधीनसिद्धिकतया जगन्मिथ्यात्वसाधनेऽनुपयोगित्वात् । न हि जगन्मिथ्यात्वमप्रसाध्य व्यावहारिकपारमार्थिकभावः सुकल्पः । ब्रह्मज्ञानबाध्यत्वलक्षणव्यावहारिकताया मिथ्यात्वघटितत्वेन मिथ्यात्वेऽनुमित्सिते पुरस्कर्तुमशक्यत्वात् । न हि तदेव पुरस्कृत्य तदेव साधनीयमिति युक्तमात्माश्रयात् ।

नापि च मिथ्यात्वनिरुक्तीनां वहुविधतया एकविधमिथ्यात्वसाधनेऽपरविधमिथ्यात्वघटितं व्यावहारिकत्वं निरुच्य पलायनपरायणतोचिता सर्वासामपि मिथ्यात्वनिरुक्तीनां मिथ्यात्वसिद्धिफलकताया अविशिष्टत्वेन मिथ्यात्वानुमितौ ततः पूर्वमेवोपजीव्यत्वेनापेक्षणीयाया व्यावहारिकताया यादृक्तादृग्मिथ्यात्वलक्षणास्कन्दितत्वेऽपि मिथ्यात्वनिरूप्यताया आवश्यकत्वेनान्योन्याश्रयस्य दुष्परिहरत्वात् ।

किंच स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वव्याप्यजड़त्ववान्पक्ष इति परामर्शो भवत्याहार्यरूपो जड़त्वस्य स्वाधिकरणवृत्त्यभावप्रतियोगित्वे पक्षे जड़*त्ववत्ताज्ञानस्यानाहार्यरूपस्यासंभ-

* हेतोर्जड़त्ववत्ताज्ञानकालीनस्य पक्षे हेतुमत्ताज्ञानस्य हेतुर्धर्मिकस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसिद्धिफलकतया स्वाधिकरणवृत्त्यभावप्रतियोगि–स्ववत्ताज्ञानस्य चाव्याप्यवृत्तित्वज्ञानशून्यतादशायामाहार्यरूपताऽवश्यकी स्ववान् स्वाभाववानित्येतज्ज्ञानस्यानाहार्यरूपत्वासंभवादिति तु तत्त्वम् ।

वात्‌ । प्रतियोग्यविरोध्यभावस्य तु अनुमित्सितत्वे ऽर्थान्तरमित्य-सकृत्कृतविस्तराः पूर्वमेव ।

तस्माद्‌ व्यावहारिकेणानात्मत्वहेतुना पारमार्थिकं स्वस-मानाधिकरणात्यन्ताभावप्रतियोगित्वमनुमेयमिति बालव्यामोहन-मात्रम्‌ ।

यदि तु रूपरसादेरधिकरणताया दुर्निर्वचनतया तेषां स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं, तथा हि रूपवति रूपम-थारूपवति रूपं तत्र प्रथमे तेनैव रूपेण रूपवति रूपाङ्गीकारे आ-त्माश्रयः । रूपान्तरेण तु रूपवति रूपाभ्युपगमे तदपि रूपवति रूपशून्ये वेति तदवस्थ एव चोद्यावतारः । एवं चान्योन्याश्रय-चक्रकानवस्थाः क्रमेण क्रमन्ते इत्यतिरोहितमेव । रूपशून्ये तु रूपाङ्गीकारे सर्वस्यारूपस्य रूपवत्त्वमित्यरूपं किमपि जगति न भवे-दिति किंचिद्रूपवत्‌ किंचिदरूपमिति सर्वलोकप्रसिद्धव्यवस्थोच्छेदस्त-स्मान्न रूपवति रूपं नापि रूपशून्ये किन्तु कल्पितेऽधिकरणे रूपं कल्पितमित्यद्वैतसिद्धान्तः । ततश्च जडमात्रस्य कल्पितत्वे तस्य स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमुचितमेवेति किं चित्रम-नात्मत्वेन जडत्वादिस्वरूपेण रूपादीनां स्वसमानाधिकरणात्यन्ता-भावप्रतियोगित्वसाधने इत्यव्याप्यवृत्तित्वस्य साधनव्यापकतया नो-पाधित्वशङ्काऽपीति चेत्‌ ।

रूपवति रूपमथारूपे रूपमिति पृच्छन्‌ वादी प्रष्टव्यः—कि-मेते आत्माश्रयादयः—दोषवति दोषत्वेनोद्भाव्यन्तेऽथवा निर्दोषे दोषत्वेन । दोषवति चेत्तेनैव दोषेण दोषवत्यथ दोषान्तरेण तत्र तेनैव दोषेण दोषवति दोषाङ्गीकारे आत्माश्रयः । दोषान्तरेण तु

दोषवति दोषाभ्युपगमे सोऽपि दोषो दोषशून्येऽथवा दोषवतीति पर्यनुयोगतादवस्थ्यमिति न निस्तारः । दोषशून्ये तु दोषाङ्गीकारे सर्वं सदोषमेव स्यादिति दोषादोषव्यवस्थैवानवस्थितेति जगद्व्यवहारोपप्लवप्रसङ्ग इत्यतिस्पष्टम् । ततश्चैवंविधदोषस्योभयप्रतिविधेयत्वान्नैतच्चोद्यावतारो जगत्सत्यतावादिमतमात्रे ।

किंच जगन्मिथ्यात्ववादेऽपि कल्पितं रूपं कल्पिताधिकरणे काल्पनिकसत्तावदित्येव वाच्यम् । एवं च ये दोषा यथा अकल्पितजगद्वादे तथा कल्पितजगद्वादेऽपि ते तादृशा एवेत्यल्पप्रज्ञतया बौ*द्धमतानुकरणमाचमाचरता भवता किमपूर्वमनुष्ठितम् ऋते परपादरजोऽवलम्बनात् । तथा हि कल्पिततद्रूपस्याधिकरणतया कल्पिते काल्पनिकी तद्रूपाधिकरणता उत काल्पनिकतद्रूपशून्ये काल्पनिकतद्रूपवत्ता । तत्र प्रथमे कल्पिततद्रूपयोगिनि कल्पिततद्रूपयोगाङ्गीकारे आत्माश्रयः । कल्पितरूपान्तरवति कल्पितरूपवत्त्वाङ्गीकारे तदपि कल्पितं रूपं कल्पितरूपान्तरवतीत्युक्तेऽन्योन्याश्रयादिप्रसङ्गः पूर्वोक्तरीत्यैव ।

कल्पितरू†पाभाववति कल्पितरूपाङ्गीकारे तु विषयनिरपेक्षकल्पनानां निरङ्कुशतया सर्वस्यापि रूपाभाववत्त्वेन रूपवत्त्वारूप-

---

* दिङ्नाग–धर्मकीर्त्तिप्रभृतिभिर्माध्यमिकैस्तन्तुविन्दुप्रभृतिभिर्योगाचारैश्चैता दुर्युक्तय उद्भाविता वैदिकेन त्वया अकस्मादेव किमित्याश्रीयन्त इति भावः ।

† अयं भावः–

यन्मते रूपं कल्पितं तन्मते रूपाभावोऽपि कल्पित इति कल्पितं यद्रूपं कल्पिततद्रूपाभाववत्तया कल्पितं यत्कल्पिताधिकरणं तत्र कल्पितरूपवत्तायोगोऽनुपाल्योभवतस्तच्चासंभवि कल्पनानां निरङ्कुशतया रूपवत्त्वारूपवत्त्वव्यवस्थायाः सर्वथा दुर्वचत्वात् ।

यदि तु फलबलाद्यत्र रूपवत्ताप्रतीतिस्तत्र काल्पनिकरूपयोगस्तर्हि यत्र भ्रमाद रूपवत्ताप्रतीतिस्तत्रापि रूपयोगाङ्गीकार आपद्यस्ते इति भ्रमप्रमाऽवधारणानुपपत्तिः । यदि तु यत्र द्वित्रि–चतुरकक्षाऽनुधावने रूपवत्ता न बाध्यते तत्र काल्पनिकरूपवत्त्वमुच्यते ।

वस्त्वव्यवस्थोच्छेदः पूर्वोक्तरीत्यैवेति न कश्चिदपि विशेषः कल्पितजगद्वादिमतेऽकल्पितजगद्वादिमतापेक्षया ऋते कल्पितत्वदुरभिनिवेशात् ।

यदि त्वनिर्वचनीयतावादपादसेवया सर्वदोषान् परिजिहीर्षसि तदा किमियमनिर्वचनीयतावादपादसेवा भगवत्सेवेव सर्वकार्यसाधिका उत युक्तिमुद्रयेति निरूपय । तत्र न प्रथमः पक्षोऽदृष्टमुद्रयाऽनिर्वचनीयतावादासिद्धेः । अदृष्टमुद्रयाऽनिर्वचनीयतावादसिद्ध्यभ्युपगमे तु युक्त्यसहकारतौल्येन निर्वचनीयतावाद एव ततः कुतो न सिध्येत् । अनिर्वचनीयतावादमात्रेऽदृष्टपक्षपातस्य दुरवधारणत्वात् ।

द्वितीयपक्षे तु अनिर्वचनीयतावादाभ्युपगमो दोषनिर्हरणहेतुरिति न कथकानां क्वचिदप्यभिमतमिति कथं तदङ्गीकारनाम्नैव गरुडादिव नागाः पलायिष्यन्तेऽनवस्थादयोदोषाः अकस्मादिव विस्मयमादधाना व्यपेतसर्वस्मयाः ।

यदि तु अनवस्थादयो दोषाः सत्तां निघ्नन्ति वस्तुनः ।
अद्वैतिनां ते सुहृदः प्रपञ्चे तत्प्रसञ्जकाः ॥ इत्युक्तदिशा अनवस्थादिषु दोषेषु तादृशीं स्ववशवर्तितां मनुषे यदिमे परव्यापादनिरताश्चिरपालितस्येव शुनः कदाऽपि स्वामिहानिहेतवो न भवन्तीति तदा कीदृशी ते तेष्वेषु स्वामितेत्यत्र वद ।

तर्हि वस्तुसद्रूपाभ्युपगमपक्षेऽपि तत्तथैव । कल्पनामात्रेण सर्वव्यवहारनिर्वहणे किमन्तर्गडुना विपर्ययेणेति तु सर्वथेतरजनचोद्यं प्रतीतेः स्वयमेव विषये साक्षित्वात् । प्रतीतिमाच्छाद्य यथेच्छं व्यवहरसि चेत्तर्हि योगाचाराज्ज्येष्ठस्य माध्यमिकस्यापि पक्षः कथं न चोदक्षमः स्यात् । यथा च निर्विशेषवाद-शून्यवादयोः सर्वथा साहोदर्यं तथा न्यरूपयाम वयमिह उपपादयिष्यते च तत्रतत्र स्वावसरे इति कृतमनल्पजल्पनेन ।

अथानवस्थादीनां स्वस्मिन् स्वभेदापादनमुखेन दूषकतया भेदस्य च निरस्तसमस्तभेदे चिन्मात्रैकरसे ब्रह्मणि सुमेधसा संभावयितुमप्यशक्यतया तत्रानवस्थादयो ऽसंभावितप्रसरा इति सविशेषब्रह्मवादिनां जगत्सत्यतामास्थायुक्तानां ते मतक्षतिहेतव इति ब्रूषे चेत् ।

तत्किं निर्विशेषसिद्धेः पूर्वं व्यवहारप्रसक्तस्य ते व्यव*हारभङ्गहेतवो न भवन्तीति नातिचित्रं, न हि निर्विशेषं साधयिष्यामीत्येतावन्मात्रश्रवणादनवस्थादीनामनवकाशसंभवो निर्युक्तिको न्याय्यः । निर्विशेषब्रह्मवादिना सह सविशेषब्रह्मवादिनो माध्यस्थ्य विचारोपक्रमे यावत्पर्यन्तं नान्यतरपक्षसिद्धिस्तावत्पर्यन्तं तादृशनियमानुपालनमावश्यकं यावता विना विचारो न निर्वहति निष्फलश्च न स्यात् । एवं चानवस्थादीनां दोषभाव उभयोरपि यावद् व्यवहारकालं समान इति कस्य हेतोस्तेऽनवस्थादयो निर्विशेषब्रह्मवादिनोऽकस्मादेव सौहार्दमाचरेयुः । यदि तु परीत्यैव परनिराकरणे प्रवृत्तस्य पराभ्युपेतमानमेयादिव्यवस्थयैव व्यवहार इति मानमेयादिव्यवस्थामनातिष्ठमानस्य कथमिव सच्छिद्रप्रवेशशीलशालिनां दोषाणां निश्छिद्रे निर्विशेषब्रह्मवादेऽवसरसंभवोऽपीति वदसि तर्हि परीत्या प्रवर्तमानस्य परीत्यनुपालनमुचितमिति ।

परस्य चैषाऽस्ति व्यवस्था यत्रानवस्थादीनां न स्वव्याघात†कत्वं तत्र तेषां दोषभावो यत्र पुनस्तेषां स्वव्याहतिहेतुत्वं तत्र ते न दोषाः । ततश्च पूर्वपरिचोदितरीत्याऽनवस्थादीनां दोषवति दो-

* अनवस्थादीनां व्यवहारभङ्गाप्रयोजकत्वेऽनवस्थादिदोषदूषितानामपि लक्षणानां लक्षणत्वं दुर्वारं तेषां व्यवहारभङ्गहेतुत्वविरहादिति तत्त्वम् ।

† यथा पक्षेतरस्योपाधित्वमनुपाधित्वं च स्वव्यातकत्वाव्याघातकत्वाभ्यां व्यवस्थाप्यते ।

षत्वमथाद्दोषवति दोषत्वमिति जिज्ञासाऽनतिलङ्घितया तेषां तादृशस्थले न दोषत्वमितरत्र च दोषत्वमिति सन्मते ऽस्ति व्यवस्था सा च भवता नाभ्युपेयत इति पररीत्या प्रवर्तमानोऽस्मि कथायामिति ते परप्रतारणमात्रम् ।

वस्तुतस्तु न वयं तच्छून्ये तद्विशिष्टे वा तस्य वृत्तिं ब्रूमहे किन्तु वस्तुतस्तद्विशिष्टे विशेष्ये । एवं च यत्र यद्वर्तते तस्य तच्छून्यत्वमेव कथम् । न च तद्वति वर्तमानस्य तस्मिन् वृत्तिरिति नियमस्तथा सति घटवति भूतले वर्तमानानां रूपरसादीनां घटेऽपि वृत्तिताप्रसङ्गादिति वाचोयुक्तिं पुरस्कृत्य गुणादिमति गुणादिसत्त्वपक्षं स्वावसरे निरूपयिष्याम इत्यकिञ्चिदिदं वादिनां साहसिकतामात्रविजृम्भितं मानोरथिकं वाग्व्यामिश्रणमात्रम् ।

एवं चानात्मत्वहेतुना रूपादेः स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वानुमानासंभवादव्याप्यवृत्तित्वस्य साध्यव्यापकत्वे सति रूपस्नेहाद्यवच्छेदेन साधनाव्यापकतया भवत्युपाधिभाव इत्युपाध्यभावेन हेतुना साध्याभावाद्यनुमानेन अव्याप्यवृत्तित्वानधिकरणत्वे सत्युक्तपक्षतावच्छेदकवत्समानाधिकरणात्यन्ताभावप्रतियोगि । अनात्मत्वात्संयोगवदिति प्रयोगो बाललीलायित इति किमधिकं विद्वद्गोष्ठीषु । एवं चापरेऽपीह पञ्चषा वा ततोऽप्यधिका वोपाधयः स्वयमूहनीयास्तर्ककुशलैरित्युपरम्यते ।

नित्यद्रव्यान्यदव्याप्यवृत्तित्वानधिकरणमुक्तप*क्षताऽवच्छेदकवत् । केवलान्वय्यत्यन्ताभावप्रतियोगि । पदार्थत्वान्नित्यद्रव्यवदिति द्वितीयप्रयोगे तु गन्धवहो गन्धवान् । आकाशं स्नेहवत् ।

* ब्रह्मज्ञानेतराबाध्यब्रह्मान्यासत्त्वानधिकरणत्ववदित्यर्थः ।

जलं नीरूपम् । पदार्थत्वात् । घटवत् । जलवत् । वायुवदिति क्रमिकदृष्टान्तद्वारा पदार्थत्वहेतुकगन्धवद्वादिधर्मिकगन्धाद्यनुमानतुल्यता । पञ्चमप्रकाराविद्यानिवृत्तिपक्षे पदार्थत्वरूपहेतोस्तत्र सत्त्वेऽपि तत्र साध्यविरहेण व्यभिचारश्च । केवलान्वय्यत्यन्ताभावप्रतियोगिष्वाकाशादिषु पक्षतावच्छेदककुक्षौ नित्यद्रव्यान्यत्वोपादानेन सिद्धसाधनवारणेऽप्यर्थान्तरं च । न हि केवलान्वय्यत्यन्ताभावप्रतियोगिनामपि गगनादीनां मिथ्यात्वमाम्नायते तैस्तैर्वादिभिः । न च तदेव मिथ्यात्वं तस्येष्टत्वेनार्थान्तरादिदोषात् ।

किंच पूर्वपरिदर्शितरीत्या हेतोः पक्षधर्मत्वे तत्र केवलान्वय्यत्यन्ताभावप्रतियोगित्वं नास्तीति हेतोर्व्यभिचारित्वम् ।

अपक्षधर्मत्वे तु स्वरूपासिद्धतया हेतुतैव तस्य कीदृशी, न चैतत्संभाव्यतेऽपि यत् यद्वृत्त्यत्यन्ताभावप्रतियोग्यपि भवत्तद्वृत्ति भवेदिति प्रतियोगिनाऽवि*रुन्धतोऽभावत्वायोगात् । प्रतियोगिविरोधित्व†मेव तु भावाभावसाधारणमभावत्वं, न चैतदविरुन्धत्यभावे भावि । भावान्तरमभावोऽन्यः कयाचित्तु व्यपेक्षयेति न्यायेन केवलान्वयिभावस्वरूपब्रह्मात्मकाभावप्रतियोगित्वाङ्गीकारेऽपि वा घटाद्यविरोधिकेवलान्वयिपारिभाषिकतादृशाभावप्रतियोगित्वे इष्टापत्तिरेव । व्यावहारिकपारमार्थिकत्वादिना प्रतियोगि–तदभावावुपकल्प्य दोषपरिहारस्तु यथा न युक्तस्तथाऽसकृदावेदितमिति किं चोद्यपरिहाराभ्याम् ।

यदि संयोगसंबन्धावच्छिन्नप्रतियोगिताककेवलान्वय्यत्यन्ताभावप्रतियोगित्वं साध्यते तदा समवायेन घटवति संयोगाद्युदासी-

* संयोग–तदभावयोरपि प्रतियोग्यवच्छेदकदेशावच्छेदेन विरोधिताऽस्त्येव ।

† इदमिह नास्ति इदमिदं न भवतीति प्रतीतिनियामकोभावाभावसाधारणः स्वरूपसंबन्धविशेषोऽभावत्वमिति निर्वचतां दीधितिकृतामप्येष एवाशयः ।

नसंबन्धावच्छिन्नप्रतियोगिताकाभावसाधने सिद्धसाधनमेवं समवायेन घटवत्यपि । यदि तु वृत्तितानियामकसंबन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वं साध्यते तदा गगनादेः संयोगादिना वृत्तित्वाप्रसिद्ध्या दृष्टान्ते गगनादौ साध्यवैकल्यं, न हि संयोगो गगनस्य वृत्तितानियामकः संसर्गः । परकीयवृत्तितानियामकसंबन्धसाधारण्येन तथात्वे तु घटप्रतियोगिकत्वविशिष्टसंयोगस्यापि घट-वृत्तित्वनियामकतया पटादेस्तत्संबन्धावच्छिन्नप्रतियोगिताकाभावमादाय सिद्धसाधनप्रसङ्गः ।

न हि पटादिर्घटप्रतियोगिकत्वविशिष्टसंयोगादिना कदाऽपि वृत्तिरिति केनाप्यभ्युपेयते ।

यदि तु स्वीयवृत्तिताऽनवच्छेदकसंबन्धानवच्छिन्नप्रतियोगिताककेवलान्वय्यत्यन्ताभावप्रतियोगित्वं साध्यते तदा स्वरूपेण पटाद्यभावमादाय सिद्धसाधनवारणेऽपि दृष्टान्ते नित्यद्रव्ये गगनादौ साध्यवैकल्यं संयोग–समवायरूपस्वीयवृत्तितानवच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकतदभावस्यैव केवलान्वयित्वात् । स्वीयवृत्तितावच्छेदकसंबन्धानवच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वसाधने तु स्पष्टमेव सिद्धसाधनं घटादेर्वृत्तितावच्छेदको यः संयोगादिसंबन्धस्तदतिरिक्तो यः स्वरूपादिसंबन्धस्तत्संबन्धावच्छिन्नप्रतियोगिताकाभावस्य परेणाप्यङ्गीकृतत्वात् ।

यदि तु नित्यद्रव्यान्यो ब्रह्मज्ञानेतराबाध्यब्रह्मान्यासत्वानधिकरणत्ववान् घटः संयोगसंबन्धावच्छिन्नप्रतियोगिताककेवलान्वय्यत्यन्ताभावप्रतियोगी । पदार्थत्वान्नित्यद्रव्यवदिति वा । नित्यद्रव्यान्यब्रह्मज्ञानेतराबाध्यब्रह्मान्यासत्वानधिकरणत्ववान् घटः । सम-

वायसंबन्धावच्छिन्नप्रतियोगिताककेवलान्वय्यत्यन्ताभावप्रतियोगी । नित्यद्रव्यत्वात् । गगनवदिति वा विशिष्य प्रयोगे तात्पर्यम् ।

तदा नित्यद्रव्यत्वमेवोपाधिः । यदि* गुणादौ साध्यसत्त्वेऽपि तत्र नित्यद्रव्यत्वविरहेण साध्योपाध्योर्न समव्याप्तिरिति नित्यद्रव्यत्वं नोपाधिरित्युच्यते तदा संयोगेनावृत्तित्वमेवोपाधिः ।

एवं च घटः संयोगसंबन्धावच्छिन्नप्रतियोगिताककेवलान्वय्यत्यन्ताभावप्रतियोगित्वाभाववान् अवृत्तित्वविरहादित्येवं साध्याभावानुमानेनानुमितिप्रतिबन्धादकिंचिदिदमिति विज्ञाः ।

एवं द्वितीयप्रयोगे समवायेनावृत्तित्वमुपाधिरित्युपाध्यभावेन अवृत्तित्वविरहेण साध्याभावस्यानुमेयत्वादकिंचित्तदिदमिति तद्विदः ।

अथावृत्तित्वविरहघटकस्य वृत्तित्वस्यैव साध्यानुमापकत्वसंभवे अवृत्तित्वविरहोऽव्याप्यत्वासिद्ध इति चेन्न अखण्डाभावघटकतया तत्सार्थक्यसंभवेन वैयर्थ्यशङ्काऽनुदयात् । अत एव तु तावदन्यतमत्वस्य हेत्वाभाससामान्यलक्षणत्वपक्षे तत्त्वस्यैवेतरभेदानुमापकत्वसंभवे तावदन्यतमत्वं न व्याप्यत्वासिद्धमिति तद्विदां स्पष्टमेव ।

न चावृत्तित्वाभावत्वस्य न साध्यव्याप्यतावच्छेदकत्वं तदपेक्षया लघुनो वृत्तित्वस्यैव तथात्वादिति वाच्यम् ।

लघुधर्मसमनियतगुरुधर्मेऽवच्छेदकत्वस्यासकृदेव वादिप्रतिवाद्युभयाभ्युपेतत्वेनैवंविधविचारस्यानवकाशपराहतत्वात् । व्यापकसामानाधिकरण्यरूपव्याप्तिग्रहस्य वाऽनुमितिजनकत्वमिति तच्चोद्यपरिहारयोरनवसरदौःस्थ्याच्चेति सुधियो विमृशन्तु ।

* साध्योपाध्योः समव्याप्तिर्नापेक्षितेति सिद्धान्ताद् यदीति ।

यच्चाद्वैतसिद्धिकृता नित्यद्रव्यस्य दृष्टान्तत्वमभिहितं तदपि बालगुड़*जिह्निकायितं दृष्टान्ते साध्यवैकल्यान्न ह्यवृत्तीनां कालाकाशादीनां केवलान्वय्यत्यन्ताभावप्रतियोगिता सत्त्वप्रतिद्वन्द्विनी तथा सति तावतैव तेषां मिथ्यात्वसिद्धौ भवतोऽपि त†चतच तत्तद्विशेषणोपादानमनर्थकमेव स्यादिति त्वदीयग्रन्थरहस्यविदां करामलकायितम् ।

किंच सामान्यतः केवलान्वय्यत्यन्ताभावप्रतियोगित्वं ब्रह्मसाधारणं सर्ववस्तुसाधारणं च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वस्य व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वस्य च सर्वत्रैव संभवादिति सर्वेतद्दोषपरिहाराय विशिष्यैव केवलान्वय्यत्यन्ताभावप्रतियोगित्वं साधनीयमिति । ततश्च कालिकेन गगनादेर्नित्यस्यापि वृत्तिमत्त्वेन वृत्तितानवच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकस्य केवलान्वय्यत्यन्ताभावस्यैव प्रतियोगित्वमनुमेयमिति कथं नित्यद्रव्यदृष्टान्तेन घटादिषु संयोग—समवायादिना वृत्तिमत्सु तत्संबन्धावच्छिन्नप्रतियोगिताकाभावसिद्धिसंभवो वृत्तिताऽनवच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावस्यैव साध्यत्वेन वृत्तितावच्छेदकसंयोगादिना वृत्तिमति घटादौ केवलान्वय्यत्यन्ताभावप्रतियोगित्वासिद्धेः । न हि गगनस्य वृत्तितानवच्छेदकसंबन्धावच्छिन्नप्रतियोगिताककेवलान्वय्यत्यन्ताभावप्रतियोगित्वेन घटस्य वृत्तितावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताककेवलान्वय्यत्यन्ताभावप्रतियोगित्वसिद्धिप्रत्याशाऽपि । ततश्च नित्यद्रव्यस्य पररीत्या दृष्टान्तत्वाभिधानं स्वपरसिद्धान्तमर्यादा‡ऽतिशायीति तद्वित्सु

* यथा कटुभेषजपानाय गुड़दानेन बाला अनुकूल्यन्ते तथेत्यर्थः ।

† अद्वैतसिद्धिग्रन्थे ।

‡ न च स्वीकर्त्तासि त्वमपि संयोगेन गगनस्य वृत्तिमत्तामिति तु तात्पर्यम् ।

किमु कथनेन । स्वमते तु शुक्तिरूप्यवदिति दृष्टान्तानुसरणमुचितमेव वादकथायां गुरुशिष्ययोरुभयोर्मिथ्याऽभिसंधितया परस्यालब्धाव-सरतया निराकरणासंभवात् । जल्पे तु शुक्तिरूप्यस्य दृष्टान्तत्वा-भिधानं यथा न संभवति तथाऽसकृदेव निरूपितमवशिष्टं च दृष्टा-न्तासंग*तिप्रदर्शनपरग्रन्थे व्यक्तीभविष्यतीत्यलम् ।

यच्च घटादेः केवलान्वय्यत्यन्ताभावप्रतियोगित्वे खपुष्पादि-साहोदर्यं तद्वैलक्षण्यप्रयोजकाभावादित्याशङ्क्य उत्पत्तिनिवृत्त्योरन्यत-रप्रतियोगित्वेन घटादौ खपुष्पादिवैलक्षण्यसंरक्षणमद्वैतसिद्धिकृतां तदपि चिन्तनीयं तत्र परस्य नित्यत्वेनाभिमतानां प्रकृत्यादीनां निवृत्तिप्रतियोगित्वमात्रं वैलक्षण्यनियामकमनित्यानां तूभयमेवेति । एवं चेह खपुष्पादिवैलक्षण्यमुत्पत्त्यादिप्रतियोगित्वे तन्त्रम् । उत्प-त्त्यादिप्रतियोगित्वं च खपुष्पादिवैलक्षण्ये इति व्यक्तः परस्पराश्रयः ।

ननु सत उत्पत्तिप्रतियोगित्वं चेदात्मनोऽप्युत्पत्तिप्रसङ्गः । असतश्चेदुत्पत्तिस्तर्हि सतोऽनुत्पादोऽसतश्च नरशृङ्गादेरुत्पत्तिप्रसङ्गः सर्वदा सर्वं सर्वस्माच्चोत्पद्येतासतः सर्वथा सौलभ्यात् । तस्मान्न सत उत्पादो नाप्यसतः । किं तर्हि अनिर्वचनीयस्योत्पत्तिरिति युक्तम् । एवं चानिर्वचनीयं घटादि उत्पद्यते न तु सदात्मतत्त्वं, नापि नरशृङ्गमसदिति सुव्यवस्थेति चेत् । किं तदनिर्वचनीयत्वं सद्भिन्नत्वे सत्यसद्भिन्नत्वे सति सदसद्भिन्नत्वं वा । सत्त्वास-त्त्वाभ्यां विचारासहत्वे सति सदसत्त्वेन विचारासहत्वं वा प्रतिप-न्नोपाधौ बाध्यत्वं वा अनिर्वचनीयत्वम् । तदेव च मिथ्यात्वम् । एवं च मिथ्यात्वमुत्पत्तौ तन्त्रम् । उत्पत्तौ च मिथ्यात्वमित्येतत्पक्षेऽपि

* शुक्तिरूप्यं नाम न किंचित्तत्त्वत उत्पद्यते बालक्रीडनकमात्रं तदुपकल्पनमि-त्येतन्निरूपणपरग्रन्थे इत्यर्थः ।

व्यक्तो ऽन्योन्याश्रयः । उत्पत्तौ मिथ्यात्वं न तन्त्रं किन्तु स्वसामग्रीति सतः सामग्रीसंवलनं नासत इति न किंचिच्चोद्यमिति चेत्तर्हि सामग्रीसंबलनं सदसत्साधारणं वा सत्येवोत्पादसामग्रीसंबलनं वा तत्राद्ये सत इवासतोऽप्युत्पादोऽवर्जनीयः । द्वितीये तु सत्येव सामग्रीसंबलनं नासतीत्याकस्मिकं वा सकारणकं वा । तत्र प्रथमे सामग्र्या आकस्मिकसदुत्पादकत्वपक्षपातस्वीकारे कार्यस्याकस्मिकत्वप्रसङ्गो दुर्वारः । द्वितीये तु किमपराद्धमसता यत्तत्र सामग्री कार्यं न जनयेदिति । कार्यमनुत्पादयन्ती सामग्र्येव वा सा कथं, सामग्र्याः स्वकार्योत्पत्तिव्याप्यत्वात् । किञ्चानिर्वचनीयाया अप्यविद्याया नोत्पत्तिप्रतियोगित्वम् । अनिर्वचनीयाया अप्यविद्यानिवृत्तेश्च न निवृत्तिप्रतियोगित्वं न च भवताऽपि तदभ्युपेयते तस्मादनिर्वचनीयत्वमुत्पत्तिप्रतियोगित्वे निवृत्तिप्रतियोगित्वे वा तन्त्रमिति रिक्तं वचोमात्रम् ।

यदि त्वविद्यायामुत्पत्तिप्रतियोगित्वविरहेऽपि निवृत्तिप्रतियोगित्वस्य, अविद्यानिवृत्तौ निवृत्तिप्रतियोगित्वविरहेऽपि उत्पत्तिप्रतियोगित्वस्य सत्त्वेनान्यतरप्रतियोगित्वनिर्वाहान्न दोषस्तर्हि अविद्यायां निवृत्तिप्रतियोगित्वमात्रम् । अविद्यानिवृत्तौ चोत्पत्तिप्रतियोगित्वमात्रमेव न तु निवृत्तिप्रतियोगित्वमत्र किं तन्त्रतयोक्तं भवति उत्पत्ति–निवृत्तिप्रतियोगित्वे तन्त्रतयोक्तस्यानिर्वचनीयत्वस्योभयप्रतियोगित्वप्रयोजकत्वात् । स्वभावस्य* च यथैतादृशातिप्रसङ्गवारकत्वं न संभवति तथाऽग्रे पराक्रम्य पराकरिष्यामः ।

किंचोत्पत्त्यादिमत्त्वस्यासद्वैलक्षण्यप्रयोजकत्वाङ्गीकारे नित्यानां कालाकाशादीनामसद्व्यावृत्तौ किंचिदन्यदेव प्रयोजकमङ्गीकरणी-

* स्वमते पदार्थानां स्थैर्याभ्युपगमात्स्वभावस्य कारणत्वसंभवेऽपि परमते न तदभावीति भावः ।

यमिति गौरवम्। तन्नित्यताऽनभ्युपगन्तॄणामपि* च ब्रह्मनिष्ठासद्वैलक्षण्ये नोत्पत्तिनिवृत्त्यन्यतरप्रतियोगित्वं प्रयोजकमित्यननुगतरूपस्य वैलक्षण्यप्रयोजकत्वकल्पनाऽपेक्षया प्रमाणसिद्धत्वस्यैवासद्वैलक्षण्यप्रयोजकताऽऽस्थेयेत्यकिञ्चिदिदमुत्पत्त्यादिप्रतियोगित्वेन वैलक्षण्याभिधानम् ।

उत्पत्त्यादिप्रतियोगित्वं घटादेर्नासद्वैलक्षण्यनिबन्धनं किन्तु स्वाभाविकमित्युक्तौ स्वभावस्य सदसत्साधारण्येन दुर्विवेचतया उत्पत्त्यादिप्रतियोगित्वं सतः स्वाभाविकमुतासत इति विवेक्तव्यं तत्र प्रथमे मिथ्यापदार्थतावच्छेदककुक्षिनिक्षिप्ताभावप्रतियोगिनस्सत्त्वं कीदृशं सत्त्वे वा मिथ्यात्वं कथं सत्त्वप्रतिद्वन्द्विमिथ्यात्वमेवानुमित्सितं भवतोऽन्यथा तु पारिभाषिकोदासीन–ग–ज–ड़–द–वादिकल्पमिथ्यात्वसाधने विप्रतिपत्तिरेव† कीदृशी। प्रतीयमानत्वमेव विशेष इति चेन्न असतोऽपि प्रतीयमानत्वात्। सत्त्वेन प्रतीयमानत्वं विशेष इति चेत्। तर्हि तदस्त्यसत्यपि भ्रमस्य नियन्तुमशक्यत्वेन असतोऽपि सत्त्वेन भानसंभवात् । सदुपरागेणाप्यसतो न भानमिति चेत्तदेव तु विचार्यते तन्न कुत इति। केवलान्वय्यत्यन्ताभावप्रतियोगिनोर्घट–खपुष्पयोरेकः सन् परश्च न तथेति। न च पर‡मतेऽपि केवलान्वय्यत्यन्ताभावाप्रतियोगित्वं न सत्त्वे तन्त्रं तथा सति केवलान्वय्यत्यन्ताभावप्रतियोगिनां संयोग–परमाणु–दिगाकाशादीनामसत्त्वप्रसङ्गात्। किं त्वन्यदेव किंचित्सत्त्वे प्रयोजकमास्थेयमिति का वेदना भवतां यदि घटादयो भवेयुः केवलान्वय्यत्यन्ताभावप्रतियोगिनः ।

* वादि–प्रतिवादिनोरुभयोरपि वैदान्तिकयोराकाशादिनित्यत्वमननुमतमिति पक्षान्तरावलम्बनम् ।

† विप्रतिपत्त्यनवतारे कथावतारासंभव इति भावः ।

‡ नैयायिकादिमतेऽपीत्यर्थः ।

एवं तर्हि भवतोऽपि काऽभीष्टसिद्धिः । न हि केवलान्वय्यत्यन्ताभावप्रतियोगी संयोगो मिथ्या न वा तथाभूतमाकाशादिकं मिथ्या सिद्धसाधनार्थान्तरादिप्रसङ्गादित्यसकृदवोचाम ।

एवं च येन संबन्धेन येन रूपेण यद्यच वर्तते तेन संबन्धेन तेन रूपेण तस्मिन् काले तस्मिन्नेव देशे विद्यमानोयस्तस्य वस्तुनस्तद्देशावच्छेदेन तेन रूपेणाभावस्तत्प्रतियोगित्वं तस्य वस्तुनोमिथ्यात्वमिति ततश्च घटादेर्वृत्तिमतो मिथ्यात्वोपपादनेऽपि गगनादेः संयोग—समवायादिना वृत्तित्वानङ्गीकारात्संयोगस्य चाव्याप्यवृत्तित्वात्तच तदभावो मिथ्यात्वं नार्जयेदिति गगनाद्यसंग्रहात् सर्वसाधारणं मिथ्यात्वप्रतिद्वन्द्विसत्त्व*—स्वरूपं दुर्निरूपमेव । क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वमसत्त्वम् । त्रिकालाबाध्यत्वं च सत्त्वमिति चेत्तर्हि त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यर्हत्वमेव मिथ्यात्वं पर्यवस्यति । अत्र च प्रथमदलस्य प्रपञ्चासत्साधारण्यमिति द्वितीयदलव्यतिरेक एव खपुष्पादितो मिथ्याभूतस्य व्यावर्तको वाच्यस्तत्रापि च सत्त्वेन प्रतीत्यर्हत्वमुत्पत्तिप्रतियोगित्वं वा केवलान्वय्यत्यन्ताभावप्रतियोगिनोघटादेः कुत इति नोक्तं भवति । तार्किकादेस्तु गगनादेः केवलान्वय्यत्यन्ताभावप्रतियोगित्वं न सर्वथाऽसतः किन्तु कालिकेन सत एवेति सर्वथा केवलान्वय्यत्यन्ताभावप्रतियोगिनः सत्त्वं किमिति न विविक्तं भवति । अयमत्रार्थसंग्रहः—निर्विशेषस्य ब्रह्मणो न विशेषकत्वं तदतिरिक्तस्य तु घटादेः खपुष्पादितो व्यावर्तकत्वेनाभिमतस्य सर्वस्यापि सन्मात्रनिष्ठात्यन्ताभावप्रतियोगितया न व्यावर्तकतासंभवोऽपि । अत्यन्ताभावप्रतियोगिनोऽपि चेद् व्यावर्तकत्वं

* एतावतोत्पत्ति प्रतियोगित्वे न कथं चिदपि मिथ्यात्वं तच्चमिति भावः ।

तर्हि घटादिरेव घटादेर्व्यावर्तकोऽत्यन्ताभावप्रतियोगी भवन्नपीति किमुत्पत्त्यादिप्रतियोगित्वादेर्व्यावर्तकत्वानुसरणफलम् ।

तस्मादत्यन्ताभावप्रतियोगिनो घटादेरुत्पत्तिप्रतियोगित्वं खपुष्पादितो व्यावर्तकमित्यद्वैतसिद्धिकृतामभिधानं कीदृशमिति निरीक्षन्तां विचक्षणाः स्वयमेवेति किमु अकाण्डताण्डवेन ।

किंच संयोगादिना विद्यमानस्यापि घटादेः संयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावमभ्युपयतो यदि उत्पत्त्यादिप्रयोज्य एव नरशृङ्गाद्यपेक्षया विशेषस्तर्हि सोऽपि विशेषो भवत्यत्यन्ताभावप्रतियोगीति कथं विशेषकः स्यात् । अत्यन्ताभावप्रतियोग्यपि उत्पत्त्यादिप्रतियोगित्वं चेद्विशेषस्तर्हि किम*पकृतं घटेन घटोऽपि अत्यन्ताभावप्रतियोगी भवन्नपि भवेत्स्वस्य विशेषकः । विशेषकत्वेऽत्यन्ताभावाप्रतियोगित्वस्यातन्त्रत्वात् । अन्यथा तूत्पत्तिप्रतियोगित्वमपि अत्यन्ताभावप्रतियोगितया विशेषकं न भवेदित्यतिस्पष्टमित्युक्तमेव ।

किंचासद्वादप्रसङ्गभीत्या सन्मात्रनिष्ठात्यन्ताभावप्रतियोगिनो नरशृङ्गसाधारणस्य घटादेरुत्पत्तिप्रतियोगित्वं न विशेषो नापि सत्त्वेन प्रतीतिमात्रं विशेषो विषयेणैव विशेषो हि निराकारतया धियामित्युक्तयुक्तेर्विषयनिरपेक्षज्ञानस्याव्यावर्तकत्वात् । न च प्रतीयमानत्वमपि विशेषः सम्भवति ब्रह्मातिरिक्तस्य तस्यापि सन्मात्रनिष्ठात्यन्ताभावप्रतियोगिनोविशेषरूपत्वासम्भवादित्यसकृदावेदितत्वात् । न च सर्वथाऽत्यन्ताभावप्रतियोगिनः पदार्थस्य सत्त्वमभ्युपेयतेऽन्ततो गगनादेरवृत्तिपदार्थस्यापि कालिकेनैव वृत्तित्वाङ्गीकारात् । न हि सर्वसंबन्धैः सर्वधर्मैश्चाभावप्रतियोग्यपि अथापि तेनतेन संबन्धेन तेनतेन रूपेण कार्यकारीति चाद्रियन्तेऽनुभवपरायणाः ।

* किमपराद्धमित्यर्थः ।

किंचैवं जगद्व्यवहारं विप्लावयस्ते घटशून्यदेशापेक्षया घटसंयोगवति देशे को वा विशेषो भवत्युक्तः । द्वयोरपि देशयोर्घटसंयोगाभाववत्त्वस्याविशिष्टत्वात् ।

ज्ञाननिर्वाह्य एव* चेत्कश्चिद्विशेषस्तर्हि सोऽपि विशेषो ब्रह्मातिरिक्तत्वेनात्यन्ताभावप्रतियोगीति कथं विशेषकः स्यात् । अत्यन्ताभावप्रतियोगिनोऽपि विशेषकत्वाङ्गीकारे तु सर्वं सर्वत्र विशेषकमत्यन्ताभावप्रतियोगित्वाविशेषात् । श्रीहर्ष†रीत्याऽतिप्रसङ्गवारणेऽपि कारणतावच्छेदकरूपस्य ब्रह्मातिरिक्तत्वेन तस्य चात्यन्ताभावप्रतियोगित्वेनौदासीन्यादेव नातिप्रसङ्गवारकतेति खण्डनखण्डनावसरे पराक्रम्य निरूपयितास्महे इति प्रतीक्षन्तां सुमेधसः ।

एवं च ब्रह्मातिरिक्तजगज्जातस्यात्यन्ताभावप्रतियोगितया उत्पत्तिप्रतियोगित्वस्याप्यत्यन्ताभावप्रतियोगित्वेन घट—खपुष्पयोर्विशेषकमुत्पत्तिप्रतियोगित्वमत्यन्ताभावप्रतियोगि भवदपि भवेद् । घट—खपुष्पे तु स्वं स्वमात्मानं न परस्परं व्यावर्तयातामिति किं बुद्धिमतां मतिपथमारोहेत कदाऽपि । उत्पत्तिप्रतियोगित्वेऽत्यन्ताभावप्रतियोगित्वं पारमार्थिकमिति उत्पत्तिप्रतियोगित्वं व्यावहारिकं केवलान्वय्यत्यन्ताभावप्रतियोगिनोऽपि घटादेः खपुष्पादितो व्यावर्तकं तर्हि घटेऽपि अत्यन्ताभावप्रतियोगित्वं पारमार्थिकमिति व्यावहारिको घटोऽत्यन्तासतो नरशृङ्गादेः स्वात्मानं व्यावर्तयिष्यतीति किं चित्रम्‡ । एवं व्यावहारिकस्य घटादेर्व्यावहारिकात्यन्ताभावप्रतियोगित्वपक्षेऽपि चोद्यपरिहारौ सुधीभिः स्वयमूहनीयाविति किं

* पूर्वं प्रतीतिविषयत्वप्रयोज्यो विशेष उक्तोऽधुना तु प्रतीतिनिर्वाह्यस्यैव विशेषरूपत्वमिति सुसूक्ष्ममीक्षणीयमवधानेन ।

† खण्डनखण्डनकारः श्रीहर्षः ।

‡ न किमपीत्यर्थः ।

वह्नूपदेशेन । तस्माद् घटादेः केवलान्वय्यत्यन्ताभावप्रतियोगित्वे-ऽत्यन्तासत्साधारणो उत्पत्त्यादिप्रतियोगित्वं खपुष्पादेर्व्यावर्तकमित्यद्वैतसिद्धिकृतां परमानवधाननिबन्धनमभिधानमिति सन्ति सन्तः साक्षिणः ।

यदपि—आत्मत्वावच्छिन्नधर्मिको भेदो न परमार्थसत्प्रतियोगिकः आत्माप्रतियोगिकत्वात् । शुक्तिरूप्यप्रतियोगिकभेदवत् । न च घटपटसंयोगे व्यभिचारः । हेतुमत्तया निर्णीतेऽङ्कुरादाविव साध्यसंदेहस्यादोषत्वात् । एवमन्येऽपि प्रयोगा यथोचितमारचनीया विपश्चिद्भिरिति दिक् । इत्यात्मव्यतिरिक्तस्यासत्त्वसाधनसंनहनं तदप्येतत्पिपीलिकास्येन प्रासादनिग*रणप्रयासप्रायमिति परिहृ†सन्ति सन्तः । तथा हि आत्मत्वावच्छिन्नधर्मिकं भेदं पक्षीकृत्य परमार्थसत्प्रतियोगिकत्वाभावं सिषाधयिषता त्वया परमार्थसत्प्रतियोगिकत्वमप्रसाध्य तदभावोनानुमातुं शक्यः । विशिष्टसिद्धेर्विशेषणप्रसिद्धिनान्तरीयकत्वात् । न च परमार्थसतो ब्रह्मणः क्वचापि प्रतियोगित्वमङ्गीकर्त्तासे न च तदनङ्गीकृत्य साध्यप्रसिद्धिं निर्वोढासे तथा सति निर्विशेषत्वभङ्गभीत्या पारमार्थिकत्वस्यैवापायात् । सविशेषे तु ब्रह्मणि प्रतियोगित्वं प्रसिद्धमदपि न साध्यप्र‡साधनायालं तस्य परमार्थसत्त्वानभ्युपगमात् । यदि तु परमार्थसतो ब्रह्मणः प्रतियोगित्वस्य च प्रत्येकप्रसिद्ध्या विशिष्टप्रसिद्धये प्रयतसे तर्हि नरस्य शृङ्गस्य च प्रत्येकप्रसिद्ध्या नरशृङ्गसाधनमपि ते सुघटम् ।

---

* असंभूतार्थाभिधानात्प्रासादनिगरणसमता ।

† मोह-मात्सर्यादियुक्तो ऽपि माध्यमिकमतमनुसरन्नपि च वैदिकंमन्य इत्युपहारहेतुः।

‡ यस्य परमार्थसत्त्वं न तस्य प्रतियोगितानिरूपकत्वमसंसर्गित्वाभ्युपगमात् । यस्य च प्रतियोगितानिरूपकता । तस्य तु सोपाधिकतया तत एव पारमार्थ्यं भग्नमिति भावः ।

अथ परैर्घटादेः पारमार्थ्याङ्गीकारेण घटादिभेदे परमार्थसत्प्रतियोगिकत्वप्रसिद्ध्या न विशेषणासिद्ध्या साध्याप्रसिद्धिरिति चेन्न। घटादेः परमार्थसत्त्वाङ्गीकारे तदभावे परमार्थसत्प्रतियोगिकत्वाभावस्य दुष्प्रसाधत्वात् । परमार्थसत्त्वानङ्गीकारे वा साध्याप्रसिद्धेर्दुरुद्धरत्वात् ।

अलीकप्रतियोगिकाभावाभ्युपगमपक्षे परमार्थसत्प्रतियोगिकत्वप्रसिद्धिनिरपेक्षस्य परमार्थसत्प्रतियोगिकाभावस्य सुप्रसाधत्वेऽपि तस्य सिद्धतया सिद्धसाधनप्रसङ्गः । न ह्यलीकप्रतियोगिकाभावानभ्युपगमः प्रतियोगिप्रसिद्धिनिरपेक्षाभावाभ्युपगन्तृमते । सिद्धसा*धनस्य स्वार्थनुमाने दोषत्वानङ्गीकारेऽपि परार्थानुमितौ तस्य दोषत्वमावश्यकमिति तु कथातत्त्वज्ञेषु सुप्रसिद्धमिति किं तदुपपादनप्रयासेन । किं चाद्वयशासने परमार्थसदात्मप्रतियोगिकभेदो मायादाववश्यमङ्गीकार्योऽन्यथा मायादेर्ब्रह्मतादात्म्यप्रसङ्गः । एवं च परमार्थसत्प्रतियोगिकाभावस्यात्मन्यपि सत्त्वेन बाधोऽपि । न चाद्वयवादे निर्विशेषसन्मात्रस्य ब्रह्मण एव पारमार्थ्याभ्युपगमेन तस्यैव चैकस्यात्मत्वाङ्गीकारेण स्वस्मिन् स्वभेदानभ्युपगमेन चात्मत्वावच्छिन्नधर्मिके भेदे परमार्थसत्प्रतियोगिकत्वासंभवेन न बाधसंभवोऽपीति वाच्यम् । मायादावात्मप्रतियोगिकभेदस्यैव आत्मन्यप्यात्मप्रतियोगिकभेदस्य सत्त्वेन बाधस्यावश्यकत्वात् । न चात्मन्यात्मप्रतियोगिकभेदस्य सत्त्वेऽपि स कल्पित इति न दोष इति वाच्यं भेदमात्रस्यैव भवतः कल्पितत्वेन आत्मन्यात्मप्रतियोगिकभेदे मायादौ ब्रह्मप्रतियोगिकभेदापेक्षया विशेषस्य दुर्वचत्वेन कल्पितत्वोक्तेरतिशयानाधायकत्वात् । तदा

* इच्छाप्रपक्षतावादिमते सिद्धसाधनं न दोष इत्यत आह—सिद्धसाधनस्येति, । कथायां वादिजिज्ञासानुरोधेन विवक्षितार्थाभिधानेन सिद्धेऽर्थे । जिज्ञासाऽनुदयेन तस्यावश्यं दोषतेति भावः ।

हि कल्पितत्वोक्तिर्विशिंष्याद्यदि अकल्पितोऽपि भेदो भवेत् । न च तथाऽस्ति अनुयोग्यन्यूनसत्ताकत्वमभावे विवक्षित्वा तद्दोषोपशमप्रयत्नस्तु आशामोदकैरशनायोपशमसमः । अनुयोग्यन्यूनसत्ताकत्वनिवेशस्य मिथ्यात्वसिद्ध्यधीनसिद्धिकतया तथा वक्तुमशक्यत्वात् । एवं चाकल्पितस्य भेदस्यासत्त्वेन कल्पितस्यात्मभेदस्य चात्मन्यपि सत्वेन आत्मत्वावच्छिन्नधर्मिको भेदो न परमार्थसत्प्रतियोगिकः । इत्येतस्य बाधितत्वमिति न बहूपपादनमर्हति ।

किं च साध्यतावच्छेदककुक्षौ परमार्थसत्प्रतियोगिकत्वनिक्षेपोऽपि स्वसिद्धान्ताभिनिवेशनिबन्धन एव । न हि परैः परमार्थसत्त्वमपरमार्थसत्त्वमिति विभागः कल्पितो येन तत्सिद्धान्ततात्पर्येण विशेषणप्रसिद्धिर्निरूह्येत । एवं च पारमार्थ्यविशेषणस्यान्यतरासिद्ध्याऽसिद्धिरपि ।

यदि तु प्रतियोगित्वस्य स्वरूपसंबन्धरूपतया परमार्थसतः सिद्ध्येव परमार्थसत्प्रतियोगित्वसिद्धिं मनुषे तर्हि प्रतियोगित्वस्य निरूपकद्वयसापेक्षत्वात्किं तद् द्वयमिति निरूपय । तत्र यदि निरूपकद्वयं परमार्थसद् ब्रह्म जगच्चोच्यते तत्र जगत्यात्मभेदस्य परमार्थसत्प्रतियोगिकत्वेऽपि आत्मत्वावच्छिन्नधर्मिके भेदे परमार्थसत्प्रतियोगिकत्वविरहेणात्मातिरिक्तस्य मिथ्यात्वसिद्धिरित्यभिप्रायस्ते तदा त्वदनुमानस्य घटत्वावच्छिन्नधर्मिको भेदो न घटप्रतियोगिकः । घटाप्रतियोगिकत्वात् पटप्रतियोगिकभेदवदित्याभाससमानता । यदि घटत्वावच्छिन्नधर्मिकभेदे घटत्वावच्छिन्नप्रतियोगिकत्वानङ्गीकारेऽपि घटप्रतियोगिकत्वमङ्गीक्रियते तदा आत्मत्वावच्छिन्नधर्मिकभेदे परमार्थसत्त्वावच्छिन्नप्रतियोगिकत्वानङ्गीकारेऽपि परमार्थसत्प्रतियोगिकत्वमपि स्वीक्रियते इति नाणुरपि विशेषः ।

यदि त्वात्मप्रतियोगिकत्वाभावेन सामान्यमुखव्याप्त्या शुक्तिरूप्यादाविव परमार्थसत्प्रतियोगिकत्वाभावसिद्धिप्रत्याशा तदा साऽपि दुराशैव हेतोः सोपाधिकत्वेन तथा वक्तुमशक्यत्वात् । तथा हि यत्रयत्र परमार्थसत्प्रतियोगि*कत्वाभावः शुक्तिरूप्यभेदादौ तत्रतत्र दोषजन्यप्रतियोगिकत्वमिति साध्यव्यापकत्वं साधनाधिकरणे त्वात्मप्रतियोगिकाभाववत्त्वेन घटभेदेऽपि तत्र दोषजन्यप्रतियोगिकत्वं नास्तीति साधनाव्यापकत्वमिति दोषजन्यप्रतियोगिकत्वं भवत्युपाधिः ।

किंच कथंचिदुपाधेरनिश्चयाभिधानेऽपि वा संदिग्धोपाधेरावश्यकत्वेन अनुकूलतर्कानवतारे तस्यैव वाद्यभिमतार्थहानिहेतुताया आवश्यकत्वम् । अत एव त्वनुकूलतर्कानवतारे तत्रतत्र संदिग्धोपाधेर्दूषकत्वं दीधितिकृदाद्यनुमतमिति हेत्वाभासकाण्डविदां सर्वमपरोक्षमिति किं वृथा चोदेन ।

यच्चाभावीयप्रतियोगित्व–संबन्धीयप्रतियोगित्वसाधारण्यभ्रमेण "न च घट–पटसंयोगे व्यभिचारः । हेतुमत्तया निर्णीतेऽङ्कुरादाविव साध्यसन्देहस्यादोषत्वात्" इत्याहाद्वैतसिद्धिकारस्तदेतदपि न युक्तं कार्यताऽवच्छेदककारणतावच्छेदकसंबन्धभेदेन कार्यकारणभावभेदस्यावश्यकतया संयोग–समवायादिस्थलीयतत्तत्प्रतियोगित्वस्यैव भिन्नत्वेऽभावसाधारण्येन सर्वसंबन्धसाधारणप्रतियोगित्वैक्यशङ्काया अप्यसम्भवेन व्यभिचारशङ्काया अवतरितुमप्यशक्यत्वात् ।

यच्च "एवमन्येऽपि प्रयोगा यथोचितमारचनीया विपश्चिद्भिरिति दिक्" इत्याह स्माद्वैतसिद्धिकारस्तदेतदपि सर्ववीरचया-

* अस्ति चेद्व साध्योपाध्योः समा व्याप्तिरित्यपि निरीक्षणीयम् ।

नन्तरं शल्ये पाण्डवविजयप्रत्याशासदृशं निरुक्तानुमानानां सर्वेषां शकल*शः प्रतिक्षेपेऽनुमानान्तराणां जगन्मिथ्यात्वसाधकत्वप्रत्याशाया अङ्कस्थमपहाय बालं गर्भस्थस्य शीलाशाप्रायं तर्ककर्कशानां चित्सुखाचार्यादीनां सर्वेषां न्यायप्रयोगस्याशेषेण दूषितत्वेन परप्रयोगाणां परत एवोपेक्षणीयत्वात् ।

इत्यर्कंदिदमद्वैतसिद्धिकृतां मिथ्यात्वानुमानसंनहनम् ।

यच्च उपाधिहेत्वाभासादिदोषजर्जरं स्वीयं प्राचां चानुमानकलेवरमनिरीक्ष्य—हेतवोऽभीष्टसिद्ध्यर्थं सम्यञ्चोबहवश्च नः । अल्पाःपरस्य दुष्टाश्चेत्यत्र स्पष्टमुदीरितम् । इति सोष्मा†निश्वासं प्राह तदप्यभिनिवेशवशंवदतामेवास्य प्रव्यनक्ति अनुमानशरीरे सर्वाङ्गदोषस्य सर्वत्र प्रसाधितत्वात् ।

यदपि साटोपं मिथ्याऽऽस्फालनम्—अभीष्टसिद्धावनुकूलतर्कबलाबलं चात्र परीक्ष्य यत्नात् । प्रवक्ष्यते दोषगणाः परेषां न खेदनीयं तु मनो‡धुनैव ॥ तदेतदपि प्रमाणपरतन्त्रेभ्यो न रोचते यतोनिर्विशेषब्रह्मवादे नानुकूलतर्कावतारसंभवोऽपि तर्को हि प्रसङ्गफलः । प्रसङ्गश्च भेदनिबन्धनः । न च सोऽभ्युपगतोभवता ।

न च व्यवहारकाले व्यावहारिकभेदस्य प्राची§नाचार्यैः खण्डनैकोद्यमैः खण्डना॥चार्यैश्चाभ्युपेततया भेदानभ्युपगमनिबन्धनदोषदानमद्वैतसंप्रदायतात्पर्यानभिज्ञतानिबन्धनमेवेति वाच्यम् । सत्यमेतदलौकिकपाण्डित्यभाजोभवादृशस्य पण्डितपुङ्गवस्य तात्पर्य

* खण्डं कृत्वेत्यर्थः ।

† प्रायोऽभिमानमूला वाच उष्णनिश्वासभुवोभवन्तीति सार्वजनीनमेतत् ।

‡ मनोमुधैवेत्यपि पाठान्तरम् ।

§ श्रीहर्षमिश्रैश्च ।

|| गौड़पादश्रीशङ्कराचार्यप्रभृतिभिः ।

मादृशां दुरवबोधमिति परं तु भेदखण्डनयुक्तीनां कोऽयं पक्षपातो यदिमास्तात्त्विकं भेदं न सहन्ते व्यावहारिकं तु क्षमन्ते इति हेतूपन्यासपुरस्सरं वद न हि भवत इव तासां भेदखण्डनयुक्तीनामप्यस्ति संकल्पो यद् व्यावहारिकं भेदं न सहिष्याम इति । किंच भेदकर्तनकुठाराणामात्माश्रयान्योन्याश्रयादीनां व्यवहाराविघातकत्वे आत्माश्रयादिदोषदूषितानामपि लक्षणादीनामदुष्टत्वप्रसङ्गेन व्यवहारोपयिकत्वप्रसङ्गः । न ह्यनिर्वचनीयभेदाभ्युपगमश्रवणमात्रेण दोषाणां पलायनपरायणताऽभ्युपगमो निर्युक्तिको युक्तः ।

भवन्मतेऽपि च चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया । अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरमित्युक्तरीत्या दूषणादिव्यवस्था व्यवहारकाले दुष्टव्यवहारासिद्धिसमर्थनायैव । एवं च भेदस्य दोषशताकु*लतया तदनङ्गीकारे कथं तन्नियन्†तव्यवहारसमर्थनमित्यतिस्पष्टम् ।

तस्माद् भेदस्य तात्त्विकत्वरक्षार्थं यावान् मम परिकरोऽपेक्षितस्तावानेव तेऽपि अनतिप्रसक्तव्यवहारसमर्थनाय व्यावहारिकभेदसंरक्षणार्थमिति भेदस्य व्यावहारिकसत्त्वार्थमपि अनिर्वचनवादिना त्वयाऽन्योन्याश्रयादिकमुद्ध‡रणीयं परस्परसापेक्षत्वे व्यवहारस्याप्यसंभवात् । न हि व्यावहारिकमृदः स्वजन्यघटसापेक्षत्वम् ।

* दोषाकुलोऽपि चेद् भेदोऽभ्युपेयेत तेन व्यवहारोऽपि चेत् क्रियेत तर्हि दोषाणां व्यवहारभङ्गाप्रयोजकतया परमार्थभूमौ अद्वयनयानुयायिनां दोषकथाया अप्यसंभवेन अन्योन्याश्रयादिदोषाणां सर्वथा निर्विषयत्वप्रसङ्गात् दोषदूषितस्यापि च व्यवहारस्य नासिद्धिसंभव इति कृतसर्वविप्लवस्य तेऽनधिकारः कथास्विति तु निगूढभणितम् ।

† एवं च भेदोपजीव्यानुकूलतर्कनिरूपणं न तदनभ्युपगन्तृमते इति तत्त्वम् ।

‡ न च क्षन्ताऽस्मि तत्परिहारे इति तु तात्पर्यम् ।

न च वस्तुसन्तं भेदमनभ्युपेत्यापि भेदमात्रेण वा भेदज्ञानमात्रेण वा व्यवहारनिर्वाहस्संभवतीति वाच्यं तथा सत्याविद्यिकव्यावहारिकभेदस्याप्यसिद्धेः ।

किंच भेदमात्रं वा भेदज्ञानमात्रं वा अन्योन्याश्रयाद्यवतारे कथमात्मानं लभेत न हि स्वरूपसन्नेव भेदो भीरुभावमवाप्नोति न तु भेदमात्रं भेदज्ञानमात्रं वेति क्वाप्यवधारितमावयोर्येन भेदमात्रे वा भेदज्ञानमात्रे वा आत्माश्रयादीनामनवकाशो वक्तुं शक्यः । उत्पत्ति–स्थिति–ज्ञप्तिषु त्रेधैव तेषां प्रतिरोधकत्वाङ्गीकारात् । न च भेदप्रतीतेर्वास्तवत्वेऽन्योन्याश्रयादिर्दोषः सावकाश इति प्रातीतिकभेदाभ्युपगमपक्षे न तद्दोषावकाश इति वाच्यम् । अद्वैतिपक्षे चरमवृत्त्यवास्तवत्वेऽपि तद्विषयस्य वास्तवत्वेन प्रतीतिवास्तवत्वस्य विषयवास्तवत्वव्यभिचारित्वात् ।

भवन्मतसिद्धे निर्विशेषे ब्रह्मणि वस्तुभूते अन्योन्याश्रयाद्यनवतारेण अन्योन्याश्रयादीनां वस्तुभूतार्थदूषकत्वव्याप्त्यसिद्धेश्च ।

नापि तद्विषयकप्रमात्मकप्रतीतिस्थलेऽन्योन्याश्रयादीनां सावकाशतया भेदप्रतीतेश्चायथाभूततया तत्रान्योन्याश्रयादयोऽनवकाशा इति वाच्यं यतस्तथा सति भेदप्रतीतेस्त्वया क्वचापि प्रमात्वानङ्गीकारेण भेदेऽन्योन्याश्रयादीनामनवसरत्वेन तेषां क्वापि दोषतयोपन्यासासंभवः ।

प्रतीतिसामान्य एवान्योन्याश्रयादीनां दूषकत्वेन प्रमात्वपर्यन्तानुधावनासंभवश्च ।

यत्तु मायायामसंभवविरहेण सर्वासंभववारकाविद्याविषवशान्निखिलानुपपत्तिविधूननेन नाद्वयानुशासने व्यवहारानुपपत्तिशङ्कावसरोऽपीति परस्पराश्रयादिदोषदूषितशरीरमपि व्यवहारमिन्द्रजालवन्निर्वे-

हेन्मायेति तत्तु बालैकवञ्चनफलं दुर्भणितमेवानभिज्ञानां तथा सति दोषदूषितानामपि लक्षणानां लक्षणत्वसंभवे तत्रापि तत्र तत्र तत्तद्विशेषणोपादानवैयर्थ्यापत्तेः । किंच लक्ष्य–लक्षणादिव्यवस्थाया व्यवहारकाले एव त्वयाऽपि वाच्यत्वेन व्यवहारे चेद्दोषा हेत्वाभासोपाधि–परस्पराश्रयादयस्तर्हि वितीर्णोऽयमन्तिमोऽञ्जलिर्विज्ञवर्येण त्वयाऽनुगताऽनतिप्रसक्तव्यवहारसमर्थनायेति कथमदोषतां तेषां ब्रूयाः । ब्रूयाश्च कथमिव तेषां दोषतामभ्युपेत्य व्यावहारिकभेदसद्भावमविद्यया विद्यमानस्वरूपमपि । तज्जहीहि दोषाणां दोषत्वमुपप्लावय च त्वदीयमपि सिषाधयिषितमर्थजातम् । अभ्युपेहि वा परस्पराश्रयादिदोषाणां दोषत्वं तदुपजीव्यं भेदं च । त्यज च–अनवस्थादयो दोषाः सत्तां निघ्नन्ति वस्तुनः । अद्वैतिनां ते सुहृदः प्रपञ्चे तत्प्रसञ्जकाः । इत्यनवस्थादीनां मिथ्यासौहार्दाभिमानमद्वैतपते ।

तस्मादनवस्थादयो निहन्युरेव वा* भेदमथवा क्षमेरन् वा पारमार्थिकमपि भेदमिति सुष्ठु प्रसाधितं भवति ।

एवं चानवस्थादीनां दोषताया भेदनैयत्येन भेदस्योपजीव्यतया नानवस्थादयो भेदमुपरोद्धुमलमुपजीव्यविरोधस्यान्याय्यत्वादिति निपुणैकनिरूपणीयमिति किमु बहूक्तेन ।

यदपि वादिद्वयसिद्धमृषाभूतेन्द्रजालस्थले कारणादिव्यवस्थोल्लङ्घिकार्यादिदर्शनवदन्यत्र तथाऽदर्शनम् । दर्शने च मृषात्वे एव पर्यवसानम् । एवं च भेदप्रतीतिर्यदि मायिकी न स्यात्सर्वव्यवस्थोल्लङ्घिनी न स्यात् । सर्वव्यवस्थोल्लङ्घिनी चेयं तस्मान्मायिकीति

* पारमार्थिक-व्यावहारिकभेदभिन्नम् ।

विपर्ययपर्यवसानान्मायिके व्यवस्थोल्लङ्घनस्य दर्शनेन व्याप्तिसिद्धि-रिति वादितात्पर्यमुपवर्ण्यते तदपि न युक्तम् ।

इन्द्रजालस्य सर्वव्यवस्थोल्लङ्घित्वे स्वजनकसामग्रीसमवधानस्याप्यनपेक्षणीयत्वेन सर्वत्रवेन्द्रजालसंभवेन सर्वत्र सर्वं वा स्यात् । कुत्रापि वा किमपि न स्यादेव वा । सर्वव्यवस्थोल्लङ्घिन इन्द्रजालस्य स्वजनकसामग्र्या अप्यनपेक्षणीयत्वात् । सामग्रीसापेक्षत्वे तु सर्वव्यवस्थोल्लङ्घनमेव कीदृशम् । न हि सर्वे सर्वमपेक्षते किन्तु किंचित्किंचिदेवेति नियमस्यान्यत्र अत्राप्यवलम्बनीयत्वेन विशेषानिरूपणात् ।

किंचेन्द्रजालस्य सर्वव्यवस्थोल्लङ्घित्वे ब्रह्मनाशकत्वं ब्रह्मजनकत्वं वा कुतो न* तस्येति वदावधानेन । नासंभूतार्थजनकतेन्द्रजालस्येति चेत् । तर्हि सर्वव्यवस्थोल्लङ्घिता नेन्द्रजालस्य सिध्यति ।

किंच घटादेरिवेन्द्रजालस्यापि स्वजनकसामग्रीसापेक्षत्वं स्वजन्यकार्यजनकत्वं च पदार्थान्तरैः समानमिति किमुक्तं† भवति ।

यदि त्विन्द्रजालस्य यादृशकार्यजनकत्वं न तादृशकार्यजनकत्वं दण्डघटादेरित्युच्यते तदा यादृशकार्यजनकत्वं दण्डादेर्न तादृशकार्यजनकत्वमिन्द्रजालस्येत्यपि समानम् ।

यदि त्विन्द्रजालेन घट–पटादिसाध्यं जलाहरणप्रावरणादिकार्यं जन्यते इति विवक्षसि तत्किमसदुत्पद्यते इति विश्वसिषि माध्यमिकमतं वा प्रविष्टोऽसि । औपनिषदसिद्धान्तमत्याक्षीर्वा यदेवमनवधानेन ब्रूषे। इन्द्रजालपदेन हि सिद्धौषधविशेषो मन्त्रविशेषो वा

* इन्द्रजालस्य ।

† न कश्चिदपि विशेष उक्तो भवतीत्यर्थः ।

वक्तव्यो न तु तदतिरिक्तं किंचिदसत्तत्त्वम् । न च तदुभयमपि स्वयं घटपटादिरूपतामुपयाति न वाऽसदुत्पद्यते न वा तेनासदुत्पादयितुं शक्यं किन्तु स्वसामर्थ्यातिशयेन तत्तत्पदार्थस्यार्थजनकसामग्रीविशेषमिन्द्रजालं झटिति समवधापयति । यथा योगिसंकल्पः । योगिसंकल्पोऽपि नासदुत्पादनशक्तः किन्तु जगतः पाञ्चभौतिकत्वेन सर्वस्य सर्वत्र संनिहिततया झटिति घटयति तं तमतिशयमित्येव शास्त्रसिद्धान्तः । एवं च योगिसंकल्पापेक्षयाऽल्पसत्ताकेनेन्द्रजालेनापि तत्तदर्थजनकसामग्रीसंश्लनमात्रं क्रियते । न त्वसदुत्पाद्यते । अमुमेवार्थमनुस्मरति सर्वोपेता च तद्दर्शनादिति वादरायणीयसूत्रमपीति पूर्वमेव समगरिष्महि । अस्ति चेन्द्रजालेऽपि अदृष्टाकृष्टोविशेषोऽन्य*-था कार्ये विशेषानुपलम्भप्रसङ्गः । कदाचिदिन्द्रजालप्रभववस्तूनां सर्वोपभोगयोग्यत्वं कदाचिदनेकोपभोगयोग्यत्वं कदाचिदेकमात्रोपभोगयोग्यत्वं कदाचित्तु दर्शनमात्रार्हत्वं न त्वशनायापिपासाद्युपशमहेतुत्वमैन्द्रजालिकस्याम्रफलादेर्नारिकेलजलादेर्वेति बहुज्ञानामस्त्यन्वयव्यतिरेकसिद्धमिति ।

अदृष्टाकृष्टोऽपि चातिशयो भवत्येवंजातीयोयथाऽल्पक्षीराऽपि धेनुश्चेचीयादृष्टवशाद्बहुक्षीरा मैत्राद्यदृष्टवशेन तु न तादृशीति क्षीरसामग्रीसाद्गुण्यवैगुण्यद्वारैवादृष्टस्य हेतुत्वमिति नेन्द्रजाले कश्चिदतिरेको मतिमतां मतिपथमधिरोहति । स्वल्पस्त्वतिरेको व्यक्तिभेदभिन्न इत्यवर्जनीयः । यथा पद्भ्यां गच्छन् पुरुषो यावन्तं मार्गं पुरुषायुषस्यार्द्धेन गच्छति तमेव मार्गमभिमन्त्रितां पादुकामधिरुह्य क्षणेन गच्छति धूमयानेनापि च कतिभिश्चिद्दिनैरिति निष्कम्पकाणां सर्वमानुभविकमिति । तस्मान्नेन्द्रजालदृष्टान्तेन कार्यकारण-

* सर्वमर्यादोल्लङ्घ्याकस्मिककार्यकारणभावानङ्गीकारे ।

भावव्यवस्थोल्लङ्घनोपवर्णनं युक्तम् । इन्द्रजालस्य कालादृष्टादिरूपसाधारणकारणनियम्यत्वात् । स्वयं नियतासाधारणकारणजन्यत्वान्नियतकार्यजनकत्वाच्च ।

ततश्च भेदप्रतीतिर्यदि मायिकी न स्यात् सर्वव्यवस्थोल्लङ्घिनी न स्यात् । सर्वव्यवस्थोल्लङ्घिनी चेयं तस्मान्मायिकीति विपर्ययपर्यवसानमिति यदुक्तं तत्सर्वथाऽयुक्तमिति तस्मात् "अभीष्टसिद्धावनुकूलतर्कबलाबलं चात्र परीक्ष्य यत्ना"दिति परेषां तर्कतत्त्वानवधाननिबन्धनमभिधानमिति । तत्सिद्धं भेदानभ्युपगन्तृमते तर्को न कथंचिदप्युपयोगितां भजते इति विदाङ्कुर्वन्तु विद्वांसः ।

किं बहुनाऽभिहितेन विद्वत्सु शीलशालिष्वमत्सरेषु
देवेश्वरे कुलिशमम्बुपतौ च पाशम् ।
भीमे गदां विश*दवाजिनि गाण्डि†वं च ॥
चक्रं च बिभ्रति समित्यथ वासुदेवे ।
युक्तिक्रमं मयि च कुत्र विपक्षशेषः ॥

इति श्रीपरमपूरुषकृपासरित्पूरपरीवाहपूर्णपात्रस्य सत्संप्रदायाचार्यपण्डितस्वामिश्रीराममिश्रशास्त्रिणः सत्कृतौ परमाचार्यपरिचर्यास्वरूपायां स्नेहपूर्तौ प्रथमधाराप्रपाते विश्वमिथ्यात्वानुमाननिराकरणं नाम प्रथमबिन्दुः । सन्तु नः शुभाशिषः पूर्वाचार्याः । परित्राणपरायणः श्रीलक्ष्मीश्वरोऽवतु नः शरणागतदीनानुपलभ्य ।



* अर्जुने ।

† गाण्डिवं, गाण्डीवमिति शब्दद्वयमपि ।